# तत्त्वमार्ताण्डविमर्शः

विमर्शकाः
श्रीविद्यामान्यतीर्थस्वामिनः
भण्डारिकेरिफलिमारुमठ-उडुपि-उभयमठाध्यक्षाः,
श्रीमन्माध्वराद्धान्तसभाप्रवर्तकाः ।

श्रीचरणैरेव सम्पादितः

प्रकाशिका :
माध्वराद्धान्तसंवर्द्धिनी सभा, मद्रास-८४.

आनन्दमाघशुद्धनवमी । शालि०शा०-१८९७.

# तत्त्वमार्ताण्डविमर्शः

विमर्शकाः

श्रीविद्यामान्यतीर्थस्वामिनः

भण्डारिकेरिफलिमारुमठ-उडुपि-उभयमठाध्यक्षाः,
श्रीमन्माध्वराद्धान्तसभाप्रवर्तकाः ।

श्रीचरणैरेव सम्पादितः

प्रकाशिका :

माध्वराद्धान्तसंवर्द्धिनी सभा, मद्रास-८४.

आनन्दमाघशुद्धनवमी । शालि०-१८९७.

# भूमिका

**हंहो तत्त्वनिकषायमाणा मनीषिणः !**

अथाघटितघटनापटिष्ठस्य परमात्मनस्त्वतर्क्येच्छया 'तत्त्वमार्तण्ड' एष ग्रन्थोऽकाण्डे प्राप्यस्मत्करतलम् । अस्माभिः सावधानम् आन्तं समीक्षकचक्षुषा निरैक्षि कृतिरेषा । केनापि विबुधवरेण्येन सुदीर्घविरुदावलीधारिणा श्रीनिवासाचार्येण विशिष्टाद्वैतवीथीपथिकेन प्राणाय्येषा कृतिः । अत्र "प्रत्यर्थिगजकेसरी"ति अभिरूपरूपाभिष्टुतैः श्रीचन्द्रिकाचार्यैः विरचितचन्द्रिकायां प्रसङ्गायातविशिष्टाद्वैतसमीक्षायाः प्रत्याख्यानार्थं ग्रन्थकारेण पराक्रामि ।

एतद्विमर्श-परीक्षणे पूर्वाग्रहग्रहं व्युदस्य प्रवृत्ते सपदि फल्गुताऽस्य लोचनगोचरा समजनि । यद्यपि 'जनानने कः करमर्पयिष्यति' इत्युक्तदिशा कृतेरस्याः परीक्षणापेक्षया उपेक्षणमेव वरमिति प्रत्यभात् । तथाऽपि प्रकाशमितायाः कृतेः समुपेक्षणम् 'अप्रतिषिद्धमनुमतं भवति' इति न्यायस्य दत्तहस्तावलम्बनं स्यात्। मन्दास्तदन्यथा शङ्केरन्। कर्तव्यकरणशैथिल्यमपि दुर्मर्षणम् इति विभाव्यात्राद्धा वयं प्रावर्तिष्महि ।

मार्तण्डप्रणेता किन्दिष्टः किमभिजनः किम्प्रयोजनोऽत्र प्रावर्तत ? इति नावधार्यते । एष तपस्वी स्वायुःकाले स्वरचितं ग्रन्थमेनं प्रकाशितं नाद्राक्षीत् कयाऽपि बलवत्या परवत्तया । एष ग्रन्थो भूयांस्तुन्दिलः । कृत्स्नस्यास्य विमर्शनं, तज्ज्ञविदुषां पुरः प्रकाश्योपस्थापनं लघीयस्य नेहसि न तावत् सुकरमिति साम्प्रतं चतुःसूत्र्यंशपरीक्षणमेव साम्प्रतम् ।

एतेन स्थालीपुलाकन्यायोऽप्यनुसृतः । अग्रे पुनः सत्यसंकल्पस्य परेशस्यानुकम्पया शेषभागोऽपि विमर्शयिष्यते । अत्रासत्कृतौ क्वापि मूलग्रन्थमृते अस्माभिः स्वातन्त्र्यं नावालम्बि ।

अत्र ये तावत् निरपेक्षप्रेक्षावन्तः परीक्षितुमुत्सहन्ते विशदीकरणं वा क्वाप्यपेक्षन्ते ते पत्रव्यवहारं विदधीरन्। स्वयं समेत्य वा विचारयितुमर्हन्ति । वयं दत्तावकाशास्तान् यथोचितं शास्त्रीयोत्तरैरभिनन्दयिष्यामः ।

अत्र समालोच्यग्रन्थांशस्य क्वचिदर्थानुवादः, कर्हिचित् एकदेशोद्धरणं व्यधायि, प्रतिपक्षिणं प्रति विमर्शवेलायां परुषभाषाव्याहारोऽपि सुधीजनारुन्तुदः सावधानं पर्यहारि । मुद्रणशैल्यां दृश्यमानोद्धरणादिचिह्नानां यथास्थानं समावेशोऽनुगतैकरूपेण कर्तुं नापारि । सारग्रहणचणा विवेचका विपश्चित इदं न बहु मन्येरन्निति प्रतीमः । इतोऽपि त्वराकृतसंशोधने काश्चित् त्रुटय आपतिताश्चेत् ता अपि संशोध्य पठेयुः सुधिय इति विश्वसिमः ।

एतद्ग्रन्थप्रकाशने कृतभूरिकैंकर्याः मद्रासधर्मप्रकाशसंस्थाधिकारिणः श्रीमन्नारायणस्मरणैः समभिनन्द्यन्ते । मध्वनवम्यवसरे विद्वत्परिषदि कृतिकुसुममिदं श्रीमदानन्दतीर्थभगवत्पादारविन्दयोः समर्प्यात्मनो धन्यान्मन्यामहे ।

विमर्शकाः— श्रीविद्यामान्यतीर्थस्वामिनः

भण्डारिकेरि-फलिमारुमठेत्युभयमठाध्यक्षाः,

श्रीमन्माध्वराद्धान्तसभाप्रवर्तकाश्च ।

---

॥ श्रीरस्तु ॥

# श्रीपूर्णबोधवेदान्तमार्तण्डः

## अथ जिज्ञासाऽधिकरणम्

रमापतिं पूर्णगुणं मुकुन्दं व्यासं च विज्ञानसहस्रभानुम् ।
पूर्णप्रबोधं च सुतत्वदीपं क्रमाद्गुरूंश्च प्रणमामि मूर्ध्ना ॥

श्रीपूर्णबोधवेदान्तमार्तण्ड उदिते सति ।
तत्वमार्तण्डखद्योतः परहार्दगुहां श्रितः ॥

ज्ञानार्थं ब्रह्मरुद्रेन्द्रादिभिरर्थितो भगवान्नारायणो व्यासत्वेनावतीर्य उत्सन्नान् वेदान् व्यञ्जयन् तदर्थनिर्णयाय ब्रह्मसूत्रसन्दर्भात्मकं शास्त्रं प्राणिनां हिताय प्रणिनाय ।

तदेतन्न्यायनिबन्धनात्मकशास्त्रस्य विषयादिमत्तासाधनेन आरम्भणीयत्वं साधयितुं तदुपयुक्ततया न्यायानुसंधानात्मकविचारमननापरनामकजिज्ञासाकर्तव्यत्वं साधयितुमिदं सूत्रम्—

**ॐ अथातो ब्रह्मजिज्ञासा ॐ**

एतदादिपञ्चाधिकरण्या अध्यायपादपीठत्वात् शास्त्रमात्रे तदन्येषां प्रायः शास्त्राध्यायपादेष्वन्तर्भावः। अस्यैवादिसूत्रत्वात् नात्र पूर्वसङ्गतिः। 'तद्विजिज्ञासस्व तद्ब्रह्मे' त्यादौ श्रुता जिज्ञासा विषयाः। न कर्तव्या उत कर्तव्येति सन्देहः। न कर्तव्येति पूर्वपक्षः, विषयादेरभावात्। अनात्मनः असत्यत्वात्। परात्मनश्चेष्टादिलिङ्गसिद्धत्वात्। परमात्मनश्च स्वात्मान्यस्य मानाभावेना भावात्। वेदान्तानां पौरुषेयत्वापौरुषेयत्वयोः आप्तत्वगुणाभावेन प्रामाण्याभावात्। स्वतः प्रामाण्येऽपि कार्यपरत्वेन सिद्धरूपब्रह्माबोधकत्वात् सिद्धार्थबोधकत्वेऽपि अद्वैतरीत्या अखण्डस्वात्ममात्रपरत्वप्रतीतेः स्वात्मनश्च अहंधीसिद्धतया सन्देहाभावेन विषयत्वायोगात्, देहादिभिन्नत्वाणुत्वादेरपि अनात्मतया असत्यत्वात्, सत्यपि

तज्ज्ञाने अपवर्गस्य अन्यस्य वा फलस्यानुपलम्भेन तस्य तत्फलत्वायोगात्। विषय प्रयोजनयोरभावे अधिकारिसंबन्धयोः सुतरामभावात्, अस्तु वा अन्यद् ब्रह्म विषयः। तथापि न जिज्ञासा फलवती, न तावद्ब्रह्मज्ञानं तस्याः फलम्। तस्य 'कर्मणा ज्ञान मातनोति' इत्यादिना कर्मणैव सिद्धेः। तस्य स्वतोऽपुमर्थत्वाच्च। नापि तद्द्वारा ब्रह्मप्रसादः फलम्। तस्यापि 'तत्कर्म हरितोषं यत्' इत्यादिना कर्मणैव सिद्धेः। नापि तद्द्वारा मोक्षः फलम्। तस्यापि 'अपाम सोमममृता अभूम' इत्यादिना कर्मणैव सिद्धेः। मिथ्याभूतबन्धनिवृत्तिरूप मोक्षस्य प्रसादनैरपेक्ष्याच्च। अस्तु वा मोक्षरूपं फलमपि ज्ञानप्रसादद्वारा। तथापि तस्या नाधिकारी। मुमुक्षुमात्रस्याधि कारित्वे स्त्रीशूद्रादेरप्यधिकारप्राप्त्या 'स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरा' इत्यादिविरोधात् अन्यस्य च तद्व्यावृत्ताधिकारस्याभावादिति।

सिद्धान्तस्तु अनात्मपरात्मस्वात्मनामविषयत्वेऽपि वेदानामपौरुषेयत्वात् स्वतः प्रामाण्यात् सिद्धार्थ वोधकत्वात् तादृशवेदेषु जिज्ञास्ये श्रुतेन यौगिकेन ब्रह्मशब्देन 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा' इत्यादि वाक्यैरन्यत्रासंभावित देशकालगुणापरिच्छेदवद्वस्तुवाचिना जीवान्यविष्णवाख्यवस्तुसिद्ध्या तस्य च सगुण निर्गुणाल्पगुणत्वादिना विप्रतिपत्तेः सन्दिग्धतया विषयत्वसंभवात्। तज्ज्ञानोत्थ तत्प्रसादजन्य मुक्त्याख्यफलवत्त्वात् तदिच्छोरधिकारिणः सत्त्वेन तत्सम्बन्धस्यापि सत्त्वान्नाद्यः पक्षो युक्तः। नापि द्वितीयः, 'श्रवणं मननं चे' ति भाष्योक्तस्मृत्या श्रवणादिरूप जिज्ञासाया एव ज्ञाने प्रधानसाधनत्वात् कर्मणस्तदङ्गत्वात् तस्य स्वतोऽपुमर्थत्वेऽपि प्रसादद्वारा मोक्षहेतुत्वेन पुमर्थत्वाच्च। 'कर्मणा त्वधमः प्रोक्तः प्रसाद' इति स्मृत्या ज्ञानजन्यप्रसादस्यैव मुक्तिहेतुत्वाच्च। बन्धस्याक्षादिमान सिद्धत्वेन सत्यत्वात् मोक्षस्य प्रसादसापेक्षत्वात् कर्मणा अमृतत्वोक्तेश्च 'अमृतो वा सोमपो भवति यावदिन्द्रो यावन्मनुः' इत्यादिना गौणत्वात्। नापि तृतीयः। मुमुक्षा मात्रस्यानधिकारत्वेऽपि 'भक्तिमान् परमे विष्णौ' इत्यादिस्मृत्या अध्ययन शमदमादि मतोऽधिकारिविषेशस्य संभवाच्च कर्तव्या जिज्ञासेति।

अत्र पूर्वोत्तरपक्षयोः शास्त्रानारम्भारम्भे फले। सूत्रार्थस्तु 'अथ' विष्णु-भक्तिपूर्वक यथाशक्त्यखिलवेदाध्ययनशमदमादिरूपाधिकारसम्पत्त्यनन्तरम् 'अतः' वेदस्यापौरुषेयत्वात् स्वतः प्रामाण्यात्सिद्धे व्युत्पत्ति सद्भावात् सामान्यतो योग्येतरान्विते शक्तिसद्भावात् बन्धस्य सत्यत्वात् मोक्षजनकात्यर्थप्रसादजनका परोक्षज्ञानजनकत्वात् ब्रह्मणः गुण परिपूर्णस्य विष्णोः 'जिज्ञासा' विचारः कर्तव्येति।

केचित्तु अथशब्दो जिज्ञासा विशेषणीभूतकालपरः न हि ब्रह्मविचार कर्तव्यतामात्रपरं साध्यम् अपि तु धर्मजिज्ञासानन्तर्यविशिष्टम्। अतःशब्दस्य तु तस्मिन् विशिष्टे साध्ये कर्मणामल्पास्थिरफलत्वनिर्णयसहितो ब्रह्मज्ञानस्य अनन्त स्थिरफलापातप्रत्ययरूपो विशिष्टो हेतुरर्थः। ततश्च सार्थकं पदद्वयमित्याहुः। तन्न अथशब्दस्योक्तप्रतीत्यानन्तर्यार्थकत्वेऽकारणादानन्तर्योक्तेर्वैयर्थ्येनाथशब्देनैव तस्य हेतुत्व लाभादतःशब्दवैयर्थ्यात्। अथशब्दस्यान्यानन्तर्यार्थकत्वे नोक्तप्रतीतिहेतुतावाचकत्व मतःशब्दस्य। 'वृत्तहेतुत्वार्थोऽतःशब्द' इति त्वन्मतस्य भङ्गप्रसंगात्।

यदस्याः तात्पर्यचन्द्रिकोक्तेराशयमजानानेन केनचिदुक्तम् (तत्वमार्ताण्डे पृ. ४) अथशब्देन कर्मविचारस्यैवानन्तर्यबोधनात् अतश्शब्देन तस्यैव हेतुत्वाभिधानाद्विकल्पा नवकाशादिति। तन्न। कर्मविचारस्य सिद्धेव्युत्पत्त्यभावज्ञानसंपादकतया पूर्वपक्ष युक्तिप्रत्यनीकत्वाभावेन तस्यातःशब्देन हेतुतया परामर्शायोगेन उक्तप्रतीत्यानन्तर्य परत्वस्यान्यानन्तर्यपरत्वस्य वा समाश्रयणीयतया विकल्पावकाशात।

न हि यस्य कस्यचित् हेतुतया परामर्शः। "तस्य च प्रकृतापेक्षत्वस्य च कात्स्न्यस्य च पूर्वपक्षयुक्तिप्रत्यनीकत्वाभावान्न तानि हेतुतया परामर्शनीयानी" ति श्रुतप्रकाश एवोक्तेः। अकारणादानन्तर्योक्तिः क्रमविशेषार्था स्यात् "हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षस" इत्यादौ तथा दर्शनादित्यपि (त. मा. पृ. ४) न, जिह्वाद्य वदान सामान्यं प्रति हृदयाद्यवदानस्य कारणत्वाभावेपि अपूर्वजनक विजातीय जिह्वाद्यवदानं प्रति कारणत्वसंभवेन अकारणादानन्तर्थे एतस्यानुदाहरणत्वात्।

यदपि (त. मा. पृ. ४) अतःशब्दस्य विशिष्टो हेतुरर्थ इत्यनुवादोऽप्यनुक्तानु वादत्वादयुक्तः। न ह्यतःशब्दो विशिष्ट प्रतीतिमभिधत्ते। अपि तु वृत्तकर्मविचार हेतुभावम्। तेन च भिन्नविषयक व्यापारद्वयहेतुहेतुमद्भावघटक तदाक्षिप्त निरुक्त विशिष्ट प्रतीत्यंशद्वयासिद्धिशंका व्यावत्यर्त इति-तदपि न। "केचित्तु अथशब्दस्य विशिष्ट प्रतीत्यानन्तर्यपरत्वेऽपि सिद्धव्युत्पत्त्याद्यभावप्रयुक्तासिद्धिशंकावारणाय पुनरतःशब्देन परामर्शः"—इत्यादिना केषांचिन्मतत्वेन स्वयमुक्तेः, अनुक्तानुवादत्वा योगात्। किंच उत्तमूरुवीरराघवाचार्यकृतसुदर्शनसेवायामपि स्पष्टमुक्तं—"तत्र ब्रह्मविषयकापातप्रतीतिः कर्मनिर्णयश्चे ति द्वयमेव विवाद विषय इति तदस्तित्व सूचनाय तद्धेतूकरणमेवातःशब्दाभिप्रेतम्। इदं द्वयमपि प्रकृतमेव। कर्मविचारात् प्राक्कालप्रभृति ब्रह्मापात प्रतितेरपि सद्भावादिति।"

किंच श्रुतप्रकाशोक्त न पूर्वपक्षयुक्तिप्रत्यनीकत्वाभावन्यायेन कर्मविचारस्य हेतु तया परामर्शासंभवः विशिष्टप्रतीतेस्तत्संभवश्च उक्त एवेत्यदोषः। अपि च कर्म

विचार हेतुत्वमात्रपरत्वे अतःशब्दस्य कथं विशिष्ट प्रतीत्यंशद्वयासिद्धिनिरासकत्वम् ? कर्मफलाल्पास्थिरत्व निर्णयस्य कर्मविचार साध्यत्वेऽपि ब्रह्मज्ञानानन्तस्थिरफलत्व प्रत्ययस्य तदसाध्यत्वात्। यदपि (त. मा. पृ. ३)स च तद्धेत्वध्ययनसाध्योपि प्रागवगतोभय विषय निर्णिनीषैकांशव्यावर्तनेनावसर प्रदायकतया अंशान्तरगोचरस्वरूपोत्पत्तौ कर्मविचार सापेक्ष इति तत्साध्योऽपि भवतीति—तदपि न। एवं सति अन्धकार निवर्तनेन चक्षुःसन्निकर्षसहकारिभूतालोकस्य चक्षुःसन्निकर्षः साध्य इति व्यवहार प्रसंगात्। युगपदुभयविषय निर्णिनीषोत्पत्त्यसंभवाच्च। तथाहि पिपासोः स्वसमीपे दूरदेशे च युगपज्जलापातप्रतीतौ सत्यां समीपस्थजलस्यैय निर्णिनीषा तावज्जायमाना दृष्टा। समीपस्थजलस्यालीकत्वे अस्वादुत्वे वा निर्णीते दूरदेशस्थजल निर्णिनीषाया अवसरः। एवं प्रकृते कर्मब्रह्मापात प्रतीतौ सत्यां प्रथमं कर्मण एव निर्णिनीषा। सुख साध्यत्वात्। ततः कर्मणामल्पास्थिर फलत्वनिर्णये क्लेशसाध्याया ब्रह्मनिर्णिनीषाया अवसरः। सुखसाध्येन कर्मणानन्तस्थिरफलसिद्धिसंभवे तदर्थं क्लेशसाध्ये ब्रह्म विचारे चिकीर्षाया अयोगात्।

यदपि 'सर्वापेक्षा' सूत्रोक्तन्यायेन यज्ञादिवाक्यावगत साध्यतावच्छेदकोपादातव्य कर्मस्वरूपावगति जनकतया विशेषणज्ञान विधयापि तस्य तत्साध्यत्वं दुरपह्नवमिति (त. मा. पृ. ३)—तन्न। विचार हेतुभूत प्रत्यय विषयतावच्छेदककोटौ कर्मणां विशेषण त्वेनाप्रवेशात्। नहि कर्मसाध्यं ब्रह्मज्ञानमनन्तस्थिरफलमिति ज्ञानमेव विचार प्रवर्तकमिति वक्तुं युक्तम्। कर्माविषयकस्य ब्रह्मज्ञानमनन्तस्थिरफलमित्याकार कस्यापि विचार प्रवर्तकत्वात्। अन्यथा 'शमदमाद्युपेतः स्यादि' ति सूत्रोक्तन्यायेन शमदमादिसाध्यं ब्रह्मज्ञानमनन्तस्थिरफलमिति ज्ञानस्य विचार प्रवर्तकत्वं विशेषण ज्ञानविधया शमदमादि विचार साध्यत्वं च विशिष्ट प्रत्ययस्य किं न स्यात्। एवं सति अतः शब्दस्य शमदमादि विचार हेतुत्वपरत्वमपि तवाङ्गीकार्यं स्यात्।

किंच ब्रह्मज्ञानानन्तस्थि फलत्व शरीरे विशेषण विधया प्रविष्टस्य ब्रह्मणोऽनन्त त्वादेश्च ज्ञानमपि विशेषण ज्ञानविधया विशिष्ट प्रत्ययजनकमिति ब्रह्म विचार स्यानन्तत्वादि विचारस्य च विशिष्ट प्रतीतिद्वारा ब्रह्मविचार हेतुत्वप्राप्त्या आत्मा श्रयत्वं स्यात्। कर्मविचारस्य त्वदभिमत निरपेक्ष पुष्कल सामग्रीत्व भङ्गश्च स्यात्।

तथा च कर्मविचारस्य भिन्नविषयकत्वेन ब्रह्मविचार साक्षाद्धेतुत्वं त्वयैव नाभ्युप गतम्। विशिष्टप्रतीतिद्वारकं तु तत् उक्तयुक्तिविरोधादयुक्तमतो विशिष्ट प्रतीतेरेव हेतुत्वप्राप्तेः अतःशब्दस्य तत्परत्वं त्वन्मते आवश्यकमिति चन्द्रिकोक्तस्य नानुक्तानु वादवं युक्तम्। यदपि (त. मा. पृ. ३) उत्तरभागविचारपर ब्रह्मजिज्ञासापद

समभिव्याहारलब्धसामर्थ्यः पूर्वभागविचाररूप सबंन्धिनमादायेत्यादि यच्च ब्रह्मजिज्ञासापद सामर्थ्यात् पूर्वभागविचाररूप वृत्तविशेष आक्षिप्तः इति—तन्न विचारसहम्। 'सर्वे वेदा यत्पदमामनन्ति' इत्यादि श्रुत्या समस्त वेदस्य ब्रह्मपरत्वेन पूर्वकाण्डमुपेक्ष्योत्तरकाण्डमात्रं ब्रह्मविचारशास्त्रं विचारयतीत्यस्यायुक्तत्वात्। अन्यथा उत्तर भागोऽपि भागविशेषमात्रं विचारयतीति किं न स्यात्। तथा च ब्रह्मजिज्ञासापदेन समस्तवेदविचारोक्तौ पूर्वभाग विचाररूपवृत्तविशेषाक्षेपो न युक्तः।

एवं च कर्मविचार हेतुता नातःशब्दार्थः। अथशब्दानधिकाभिधायिना तदुक्तानुवादकेनातःशब्देन उक्तासिद्धिशंकापवादक हेतूवत्यसहकृतेन तन्निरासासंभवाच्च। यदत्रोक्तं (त. मा. पृ. ४) कर्मविचारावगत विचार्य कर्मवृत्ति तत्तदसाधारणाकार गमकैतच्छब्दप्रकृतिकेन तेन तदाकार समर्पणे उक्तशंकानिराससौलभ्यादिति तन्मन्दम्। आवृत्तिविधानादि विशेषविचारमन्तरा कर्मणामल्पास्थिरफलत्वाप्रतीतेः विशिष्ट हेत्वाक्षेपासंभवात् अथशब्देनापि तत्तदसाधारणाकारवत्तया कर्मज्ञानस्यैवानन्तर्यं बोधनात् अतःशब्दस्य ततोऽप्यधिकाभिधायित्वासंभवात्।

किंच विशिष्ट हेतुघटक कर्माल्पास्थिरफलत्व निर्णयासिद्धिशंकायाः कर्मविचार हेतुताभिधायिना अतःशब्देन निरासेऽपि विशेष्य भूत ब्रह्मज्ञानानन्तस्थिरफलत्व प्रत्ययस्य सिद्धव्युत्पत्त्यभावज्ञान प्रतिवद्धस्यासिद्धिशंका नातःशब्देन शक्या निरसितुमिति उक्त शंका निरास दौर्लभ्यमेव। यदपि (त. मा. पृ. ४) अथशब्दस्य वृत्तानन्तर्य बोधन एव तात्पर्येण वृत्तहेतुता बोधकातःशब्दस्यानुवादकतया प्रयोजन जिज्ञासायां तच्छंकावारक सिद्धव्युत्पत्तितात्पर्यस्यापि कल्पनादिति—तदपि न। अनुवादसार्थक्याय प्रयोजनकल्पनस्यागतिकगतित्वात्। अम्बातातादि शब्द प्रयोगेष्वनुभवसिद्धसिद्धव्युत्पत्तेः बुद्धिस्थपरामर्शकेनातःशब्देन परामर्शसंभवे तत्त्यागेनाथशब्दोक्तानुवादकत्वं परिकल्प्य तत्सार्थक्याय किञ्चित्प्रयोजनकल्पनस्य प्रक्षालनाद्धीतिन्यायपराहतत्वात्।

यदपि वृत्तहेतुत्वार्थोऽतःशब्द इति त्वन्मत भङ्ग प्रसंगादिति चन्द्रिकोक्तदूषण परिहारायोक्तं (त. मा. पृ. ४) कर्ममीमांसानन्तर्यमथशब्दार्थोऽस्तु। अतःशब्देन विशिष्ट प्रतीति हेतुभाव एवोच्यताम्। न चैवमतःशब्दो वृत्तस्य हेतुभाव इत्यस्य व्याहतिरिति वाच्यम्, कृत्स्न शास्त्र पूर्ववृत्ततया बुद्धिस्थाया आपातप्रतीतेः कर्म विचारानन्तर्यार्थकाथशब्दमहिमलभ्यस्य कर्मफलाल्पास्थिरत्वनिर्धारणस्य च वृत्ततया व्याहत्यभावादिति तत् स्वव्याहतम्। आनन्तर्य प्रतियोगिनोऽतःशब्देन परामर्शसंभवे तत्त्यागायोगाच्च। 'अथातो धर्म जिज्ञासा' 'अथातः क्रत्वर्थ पुरुषार्थयोर्जिज्ञासा' 'अथातः शेषलक्षणम्' 'अथातो दर्शपूर्णमासौ व्याख्यास्यामः' इत्याद्यनेकस्थल

दृष्ट प्रकारत्यागायोगाच्चेति (त. मा. पृ. १३) स्वयमुक्तत्वात्। किंच त्वदुक्त रीत्या विशिष्ट प्रतीतेः पूर्ववृत्तत्वेन तदानन्तर्यमेवाथशब्देन किमिति नोच्यते। एवं सत्यथशब्दोक्त हेत्वसिद्धिवारकत्वमतःशब्दस्य लभ्यते। तत्यागेनाक्षिप्तहेत्व सिद्धि वारकतैव समाश्रयणीयेति का राजाज्ञा। 'अतःशब्दो वृत्तस्य हेतुभावे' इति त्वद्भाष्य वाक्यस्य अतःशब्दोऽव्यवहितपूर्वप्रकृतस्य हेतुतया परामर्शकः, अव्यवहितपूर्वप्रकृतं च अथशब्द समभिव्याहारे तदुक्तमेव भवितुमर्हतीति तात्पर्यात् तदनुसारेण चन्द्रिको द्भावितां व्याहतिं परिहर्तुं भाष्यस्यान्यार्थ परिकल्पनमन्याय्यम्। यदि अतःशब्देन अथशब्द प्रस्तुतस्यैव परामर्श इत्येतन्नाद्रियते तर्हि बुद्धिस्थ परामर्शोस्तु अम्बा ताता दिशब्दप्रयोगेष्वनुभवसिद्धत्वेन बुद्धिस्थायाः सिद्धव्युत्पत्तेरतःशब्देन हेतुतया परामर्शे तस्य पूर्वपक्ष प्रत्यनीकत्वगुणलाभोऽपि भवति।

किंचेदमवधेयम्। कर्मविचारानन्तरं तत एव हेतोः ब्रह्मविचारः कर्तव्य इति सूत्रार्थमुक्त्वा सिद्धेव्युत्पत्तिसंभवात् ब्रह्मविचारः कर्तव्य इत्यसंगतमुत्सूत्रं सिद्धान्त कथनं तव न युक्तम्। यदत्रैतत्परिचोदनं पूर्वमीमांसानभिज्ञकृतमिति प्रतिज्ञाय अथातो धर्मजिज्ञासेत्यत्र अथाध्ययनानन्तरं तत एव हेतोर्धर्मविचारः कर्तव्य इत्युक्त्वा प्राभा करैरध्ययनस्याचार्यकाधिकारत्वान्न धर्मविचारः कर्तव्य इति पूर्वपक्षं कृत्वा अर्थाव बोधाधिकारत्वात्कर्तव्य इति सिद्धान्तितम्। भाट्टैस्त्वध्ययनस्य स्वर्गार्थत्वान्न धर्म विचारः कर्तव्य इति पूर्वपक्षं कृत्वार्थज्ञानार्थत्वात्कर्तव्य इति सिद्धान्तितमित्यादिना समाधानमुक्तं (त. मा. पृ. ४) तदपि न। पूर्वं मीमांसायां च क्वचित्क्वचिदर्वाचीन व्याख्यातृभिराकुलत्वमापादितमिति श्रुतप्रकाशोक्तं विस्मृत्य अन्धपरम्परानुसरणस्या युक्तत्वात्। सौत्रपदनिरस्यैर्हेतुभिः सूत्रावतारिकारूपपूर्वपक्षसंभवे हेत्वन्तरेण पूर्व पक्षकरणस्य पूर्वमीमांसाव्याख्यातृणामप्यसंगतत्वात्। अस्तु वा अध्ययनस्य धर्म विचारकर्तव्यत्वे साक्षाद्धेतुत्वासंभवेपि अर्थ ज्ञानार्थत्वरूप हेतुद्वारा संभवतीति तत्र समाधानम्। तव तु कर्मविचाररूपहेतोः साक्षात्परम्परया वा हेतुत्वमेवानुपपन्नम्। प्रत्युत सिद्धव्युत्पत्त्यभावनिर्णयजनकत्वेन विरोधित्वमेवेति पूर्वमुक्तम्।

यदपि न च विधिवाक्यस्थस्यास्य ब्रह्मशब्दस्य स्वप्रधाने सिद्धे व्युत्पत्तिरद्यापि सिद्धा येनेह सौत्रपदेन सूच्येतेति चन्द्रिकोक्त दूषण परिहारायोक्तं (त. मा. पृ. ५) उक्तरीत्याथशब्देनैव तत्सूचनात् ब्रह्मजिज्ञासासामर्थ्येनापि तस्यैवोपोद्बलनाच्चेति— तदपि न। अथशब्देनैव तत्सूचनमित्यङ्गीकारे श्रुतप्रकाशरीत्या अथशब्दाक्षिप्त हेत्वसिद्धिशंकापरिहाराय सिद्धव्युत्पत्तिसूचनार्थत्वेनांगीकृतस्य अतःशब्दस्य वैयर्थ्यापत्तेः।

किं च सिद्धव्युत्पत्तिसूचकत्वं त्वदुक्तरीत्या अथशब्दस्य वा श्रुतप्रकाशिकारीत्यातः शब्दस्य वा ब्रह्मजिज्ञासासामर्थ्येनापि इति त्वदुक्तरीत्या ब्रह्मशब्दस्य वेति बिनिगमना विरहः। त्रयाणामपि सूचकत्वे वैयर्थ्यम्। अभ्युपेत्य चेदमुक्तम्। वस्तुतस्तु ब्रह्म जिज्ञासासामर्थ्येन तदुपोद्बलनमित्यसंगतमेव। ब्रह्मशब्दस्याद्यापि स्वप्रधाने सिद्धे व्युत्पत्त्यसिद्धेरुक्तत्वात्। नहि विधिवाक्य मध्यस्थो ब्रह्मशब्दः स्वप्रधाने सिद्धे व्युत्पन्न इति संभवति। अन्यथा गामानयेत्यत्रापि तत्संभवेन कार्य व्युत्पत्तिपक्षे तदुदाहरणं न स्यात्। विधिवाक्येतरस्थल प्रयुक्त ब्रह्मशब्दस्य सिद्धव्युत्पत्तिसूचकत्व संभवेऽपि प्रकृते तदसंभव एव। एवं च न ब्रह्मपदेन सिद्धव्युत्पत्तिसूचनं संभवतीति चन्द्रिकोक्त दूषणे स्थिते यदत्र "न च विधिवाक्यस्थस्यास्य ब्रह्मशब्दस्य स्वप्रधाने सिद्धे व्युत्पत्ति रद्यापि सिद्धा येनेह सौत्र पदेन सूच्येते" ति चन्द्रिका वाक्ये येनेहेत्याद्यंशं बिहाय पूर्वभागोपरि कश्चन कश्चित्कान्तापूर्वपक्षः कृतः (त.मा.पृ. ५) —यत्तु ब्रह्मशब्दस्य सिद्धेव्युत्पत्तिरद्याप्यसिद्धेत्युपपादनं तन्न प्रकृतोपयुक्तं कार्यमात्र व्युत्पत्त्यवष्टम्भकृत स्यानारम्भणीयत्वपूर्वपक्षस्य तन्निरसन मात्रापेक्षितया अम्बा तातादिशब्दव्युत्पत्त्य वष्टम्भेन तन्नियमभङ्गमात्रेण तत्सम्भावनयैव तदारम्भोपपत्तेरिति तत्रैवं प्रष्टव्यम् किमेतावता ब्रह्मशदेब्न सिद्धव्युत्पत्ति सूचनासंभवरूपो दोषः परिहृतः? कार्यव्युत्पत्ति नियम भङ्गमात्रेण पूर्वपक्षनिरासेऽभिमते सौत्रपद निरस्यत्वं पूर्वपक्षस्य कथम्?

सिद्धे व्युत्पत्त्यभावाद्विचाराकर्तव्यत्वे त्वद्रीत्या पूर्वपक्षिते तत्कर्तव्यतामात्रं सिद्धान्तयितव्यं न त्वानन्तर्य विशिष्टं कर्तव्यत्वम् न हि सिद्धे व्युत्पत्त्यभावेऽन्यथापि विचार कर्तव्यता सिद्ध्यतीति चन्द्रिकोक्तं दूषयितुं सिद्धव्युत्पत्तेः कर्मविचार द्वाराक्षेप व्युदासैकपरतां स्वीकृत्य, अतएव साक्षात्तस्या उत्तर भागविचार हेतुतोक्तिः केषांचिदयुक्ता व्यभिचारादि' ति यदुक्तं (त.मा.पृ. ६) तन्न-कर्मविचारं प्रति विशिष्ट प्रतीतेः द्वारत्वासंभवस्योक्तत्वात्। सिद्धव्युत्पत्तेः ब्रह्मविचार व्यभिचारित्वे विशिष्ट प्रतीति व्यभिचारित्वस्यापि प्राप्तेश्च। त्वदुक्तरीत्यैव उपासना विध्येकवाक्यतया पार्थक्येन वा क्रियार्थाविशेष प्रवृत्तार्थवादन्यायविषयतया कर्मविचारेण सहैव वा "ब्रह्म विदाप्नोति परं तदेषाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्मे" त्यादि वाक्यैः ब्रह्मज्ञानानन्त स्थिर फलत्वज्ञानसंभवात्।

ब्रह्मकाण्डस्य देवताकाण्डेनैकशास्त्र्यपक्षे व्याख्येये ब्रह्मभागस्येव देवताभागस्य पृथगभावेन कर्मसमवेतदेवताप्रतिपादनैकान्तस्य देवताकाण्डस्य कार्यव्युत्पत्यविरोधेनोपपन्नस्य स्वातन्त्र्येण सिद्धव्युत्पत्यनपेक्षत्वादित्यपि (त. मा. पृ. ७) न युक्तम्। उपासना समवेत ब्रह्मप्रतिपादनैकान्तत्वेन ब्रह्मकाण्डस्यापि कार्यव्युत्पत्त्यविरोधा

पातात्। 'अग्निमीळे' इत्यादि मन्त्रेषु कर्मसमवेतत्वेन देवताप्रतिपादनाभावेन देवताभागस्य पृथगभावायोगाच्च। कर्मसंबन्धित्वमात्रेण देवतानां कर्मशेषत्वे उपासनासंबन्धित्वेन ब्रह्मणोऽपि तच्छेषत्व प्राप्तेश्च। यदपि देवताकाण्डैकशास्त्र्य वादास्त्वनास्था दुस्थाः परपक्षवादाभिप्राया वा नेया इत्युक्तं (त. मा. पृ. ७) तदपि न। जिज्ञासाधिकरणस्य देवताकाण्डान्तिमाधिकरणेन संगतिरिति वदता तव अधिकरण चिन्तामण्यादिना विरोधात्।

यदप्युक्तं (त.मा.पृ. ८) सिद्धरूपदेवताविचारेऽपि सिध्दव्युत्पत्यनपेक्षत्वमास्थाय यथा त्वन्मते आनन्दमयाधिकरणे व्युत्पादयिष्यमाणं समन्वयमादाय शास्त्रयोनि त्वोक्तिः तथेहाप्येतदधिकरणव्युत्पाद्यां सिध्दव्युत्पत्तिमुपजीव्य सिध्दरूप देवता विचारोपपत्तिरिति—तदपि न, दृष्टान्त वैषम्यात्। पूर्वं समन्वयासंभावनारूपप्रतिबन्ध काभावेन शास्त्रयोनित्वोक्ति र्नयुक्ता। प्रकृते तु कर्मविचारापादित सिध्दव्युत्पत्य संभावनारूप प्रतिबन्धकसत्वेन तन्निवृत्तिं विना देवताविचारो न युक्त इति। कर्म विचारेण कर्मकाण्डभागस्य कर्मपरत्व निर्णयेऽपि न तस्य ब्रह्मणि समन्वयासंभावना पादकत्वं युक्तम्। राजा कुवलयोल्लासीत्यादेरिव अनेकार्थत्वेनाप्युपपत्या कर्मपरत्व मात्रस्य ब्रह्मपरत्वाविरोधित्वात्।

यदपि क्रमबोधक श्रुत्याद्यभावात् कर्मविचारानन्तरं ब्रह्मविचार इति सौत्राथ-शब्दार्थोऽनुपपन्न इतिचन्द्रिकोक्तमसहमानेन 'परीक्ष्य लोकान्, कर्मचितानित्या' दिश्रुत्युदा हरणं (त.मा.पृ. ८) तत् स्वव्याहतम्। यद्यप्यत्र गुर्वभिगमनविधिपरत्वान्न क्रमो भिधेय इति स्वयमुत्तरत्राभिधानात् (त.मा.पृ. ९) गुरुमतानुसारेण श्रौतक्रमसंभवश्चेत् मतान्तरेषु का गतिः। किंच कर्मचितानिति कर्मफलपरीक्षाया एव उक्तत्वेन कर्मस्व रूपपरीक्षा कुतो लभ्यते। कर्मस्वरूपपरीक्षां विना तत्फलपरीक्षाया असंभवादिति तु न मनोरमम्। त्वया हि ब्रह्मापरोक्षे जाते ब्रह्मणा दीयमानस्य अतएव ब्रह्म जन्यस्यानन्तस्थिरफलस्य निर्णयः ब्रह्मानुभवं विनापि तत्पूर्वमेव भवतीति स उपासना प्रवृत्तिहेतुरिति चाभ्युपगतम्। तद्वदेव कर्मनिर्णयं विना तत्फलनिर्णयोऽपि जायमानो न शक्यो वारयितुम्।

किंचास्यां श्रुतौ कर्मफलपरीक्षाया विज्ञानपदोक्तापरोक्षाङ्गनिर्वेदसाधनत्वमात्र मुक्तम्, न तु विचारसाधनत्वम्। 'विविदिषन्ति यज्ञेने'त्यादाविव वेदनादिपदानाम परोक्षार्थत्वस्य मुख्यत्वात्। कर्मणामुपासनाङ्गत्वेन कर्मब्रह्मविचारयोः पौर्वापर्यमिति तु (त.मा.पृ. ८) व्यधिकरणत्वान्नोपादेयम्।

यदपि वेदाध्ययनक्रमेण तदर्थापातप्रतीतेरपि क्रमिकत्वात् तत्प्रयुक्त विचार योरपि क्रमसिद्धिरिति (त.मा.पृ. ८)—तदपि न। आपातप्रतीतेः क्रमिकत्वेपि

तदर्थेषु यत्नोत्कटः सन्देहो वा आदरो वा तद्विचारे प्रथमप्रवृत्तिसंभवात्। यदपि कर्म फलाल्पास्थिरत्वनिर्णयसहितब्रह्मज्ञानानन्तस्थिरफलापातप्रतीतिमत्पुरुषकर्तृकतया ब्रह्म विचारं विदधत्या 'परीक्ष्ये'त्यादि श्रुत्यैव ब्रह्मविचारस्य कर्मविचाराधिकृता धिकारत्वावेदनेन कर्मविचारानन्तर्यस्य अथशब्दार्थतायाः प्रामाणिकत्वाच्चेति (त.मा.पृ. ८) — तदप्यप्रामाणिकम्, कर्मविचारं विनापि विशिष्टप्रतीतिसंभवस्य, श्रुतौ विज्ञानपदोक्तापरोक्षाङ्गनिर्वेदसाधनत्वेन कर्मफलपरीक्षाविधानस्य चोक्तत्वात्।

८. यदपि कर्मणामुपासनाङ्गत्वेन कर्मब्रह्मविचारयोः पौर्वापर्यमित्युक्त्वा पुनरपि तदेवोक्तं (त.मा.पृ. ८) कर्मणां चित्तनैर्मल्यसंपादनद्वारा ब्रह्मज्ञानोपयोगित्वस्या नेकप्रमाणप्रतिपन्नतया तद्विचारयोः पौर्वापर्यस्यावश्यकत्वाच्चेति तत्रापि पूर्वोक्तमेव वैयधिकरण्यदोषं पुनरुद्भावयामः। यदपि कर्मकाण्डीयन्यायोपजीवनाच्च तदानन्तर्य मेव युक्तमिति भाषणं (त.मा.पृ. ८) तदपि 'येषां सूत्रत्वमञ्जसे' त्यादिना स्कान्दे स्तूयमानानां मुख्यसूत्रत्वोपेतब्रह्मसूत्राणाम् अतादृशकर्मकाण्डीयसूत्रोपजीवनं वर्ण यतस्तव दुर्भाष्यस्यैव भूषणम्। अस्मद्भाष्ये कुत्रापि ब्रह्मसूत्रैः कर्मकाण्डीयन्यायोप-जीवनस्यानुक्तत्वात् इति।

किंच "तद्यथेह कर्मचितो लोक" इत्यादिश्रुत्यैव कर्मफलत्वावच्छेदेनानित्यत्व-निश्चयादेव तन्निश्चय इति किं कर्मविचारेण। यदत्र नहिनिन्दान्यायेन ज्ञानप्रशंसा मात्रपरत्वशंकाग्रस्तत्वान्न निश्चय इति (त. मा. पृ. ८) तदपि मन्दम्। पुण्यफल क्षीयते, कर्मफलत्वादैहिककर्मफलसंपदादिवदिति सोपपत्तिकश्रुतौ कर्मफलक्षयित्वोप-पादनात्। तात्पर्यलिङ्गेषु प्रबलतमया उपपत्त्या स्वार्थे श्रुतितात्पर्यावधारणे सति नहिनिन्दान्यायस्य तत्राप्रसरात्। "चातुर्मास्यादिकर्मस्वपि केवलस्य कर्मणः क्षयिफलत्वोपदेशात् अक्षयफलश्रवणमापेक्षिकं मन्तव्य"मिति त्वद्भाष्येपि मुण्डक-श्रुतेरेतस्या नहिनिन्दान्यायविषयत्वस्य अक्षयफलश्रुतेस्तद्विरोधेनान्यार्थे नेयत्वस्य चादृतत्वाच्च।

कर्मविचारः आवृत्तिविधानादिनाल्पास्थिरफलतां कर्मणामवगमयतीत्यपि (त.मा.पृ. ८) अनेन प्रत्युक्तम्। आवृत्तिरसकृदुपदेशादिति सूत्रे ध्यानापरपर्याया-सकृदावृत्तवेदनफलं मोक्ष इति सिद्धान्तितत्वेन मोक्षस्यापि क्षयित्वापातात्।

अनवधारणात्मकं तु ज्ञानं न वैराग्यहेतुरित्यपि (त.मा.पृ. ८) स्वन्यायविरुद्धम् अनवधारणात्मकेनापातप्रत्ययेन महायाससाध्येऽपि ब्रह्मविचारे तव प्रवृत्तिश्चेत् अनव-धारणात्मक कर्माल्पास्थिरफलत्वज्ञानेन कर्मणो निवृत्तिः कुतो नेति। वस्तुतस्तु

महायाससाध्ये प्रवृत्तिरिष्टसाधनतानिश्चयमपेक्षते। निवृत्तिस्तु अफलत्वसंभावनयापि स्यात्। तद्विपरीतं तु त्वयोच्यते। कोट्यंतराविषयकं संभावनाज्ञानं प्रवर्तकं चेत् तादृशमेव निवर्तकमप्यस्तु। विचारे तु पूर्वोक्तदिशा कर्मणामल्पास्थिरफलत्वज्ञानस्य अवधारणात्मकत्वमेव युक्तम्।

नित्यानित्यविवेकस्य शमादेश्च संपत्तेरेतच्छास्त्रप्रवृत्त्यधीनत्वादितरेतराश्रयणं दुर्वारमित्यपि (त. मा. पृ. ६) न श्रद्धेयम्, इतिहासपुराणादिनापि नित्यानित्यविवेकादि-सौलभ्यात्। न चेतिहासादिजन्यज्ञानस्यानिश्चयरूपत्वेन वैराग्याजनकत्वमिति वाच्यम्; अफलत्व संभावनया अपि वैराग्यजननस्योक्तत्वात्। किं च ब्रह्ममीमांसानधिकारिणोऽपि स्त्रीशूद्रादयः इतिहासादिश्रवणेनैव वैराग्यादिसंपन्ना भवन्तीत्येतन्नापलपितुं शक्यम्। कथमन्यथा

**स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरा।**
**इति भारतमाख्यानं कृपया मुनिना कृतम्॥**

इति शूद्राद्यर्थमेव वेदप्रतिनिधित्वेन इतिहासादिप्रणयनोक्तिः? यदि तच्छ्रवण पापक्षयमात्रफलकं तर्हि वैराग्यभक्त्याद्युत्पत्तिस्तेषामाकस्मिकी स्यात्। न च भवान्तराधिगतज्ञानाप्रमोषादेव तेषां ब्रह्मनिष्ठत्वम्, एतत्कल्पनस्य इतिहासादि श्रवणं न वैराग्यादिहेतुरिति सिद्धयुत्तरकालीनत्वेनान्योन्याश्रयात्। वस्तुतस्तु इतिहासादि श्रवणस्य वैराग्याद्यहेतुत्वमप्रामाणिकम्।

**मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।**
**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥**

इत्यादिगीताप्रामाण्यात् स्त्रीशूद्रादीनां भगवद्भक्त्यादिना परगतिप्राप्तिसिद्धेः। इतिहासादीनां केवलपापक्षयमात्रहेतुत्वे तदनुपपत्तेः। एतेन विदुरादीनां ब्रह्मनिष्ठत्व भवान्तराधिगतज्ञानाप्रमोषादित्यप्यपहस्तितम्। 'येऽपि स्युः पापयोनय' इति भगवत्समाश्रयणविशिष्टपापयोनित्वावच्छेदेन ब्रह्मनिष्ठत्वोक्तेः। तादृश धर्मावच्छेदेन भवान्तराधिगतज्ञानाप्रमोषमात्रप्रयुक्तभक्त्यादिकल्पनं त्वत्यन्ताप्रामाणिकम्।

किं चेतिहासादेः पुण्यकथावगतिमात्रद्वारा पापक्षयकारित्वमुत ब्रह्मावगतिद्वारापि? नाद्यः पुण्यकथारहितगीतादावगतेः। न द्वितीयः। तयैव ब्रह्मावगत्या वैराग्यादि जननस्यापि संभवेन तदपलापायोगात्। न चोपबृंहणीयवेदज्ञानानधिकारादुपबृंहण-मात्रेणोपासनोपयोगि ज्ञान पौष्कल्यं न संभवतीति वाच्यम्; स्त्रीशूद्रब्रह्मबन्धूना-मित्यादौ वेदानधिकारिणां वेदप्रतिनिधित्वेन भारतादिनिर्माणोक्तेरलीकतापातात्।

वस्तुतस्तु उपबृंहणमात्रत्वमितिहासादीनामप्रामाणिकमेव। 'इतिहासपुराणः पञ्चमो वेदानां वेद इति श्रुत्या तेषां पञ्चमवेदत्वे सिद्धे 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुत्या तेषां स्वातन्त्र्येणापि ब्रह्मज्ञानकारणत्वसिद्धेः। आकांक्षादिमत्पदकदम्बकत्वेन तेषां शाब्दबोधजननसामर्थ्यस्यापलपितुमशक्यत्वाच्च।

यदि चाङ्गतया विहितस्य स्वतन्त्रतयोपादाने तज्जन्यज्ञानस्य पुस्तकपाठादिलब्ध-वेदार्थज्ञानस्येव शास्त्रविरोधाददृष्टसामर्थ्यवैकल्यमित्याशयः, तर्हि वेदगतोपक्रमादि-वाक्यानामपि तात्पर्यावधारणाङ्गतया तेषां स्वतन्त्रतयोपादाने तज्जन्य ज्ञानस्या-दृष्टवैकल्यप्रसक्तिः। तादृशज्ञानस्याबाधितत्वेन ग्राह्यत्वं चेत्समं प्रकृतेऽपि। 'सर्वे वेदा यत्पदमामनन्ती'त्यादि श्रुत्या स्वातन्त्र्य मप्युपक्रमादीनामवगतमिति चेत् तथैव श्रुत्या पञ्चमवेदानामितिहासादीनामपि स्वातन्त्र्यावगतिरिरिति संतोष्टव्यम्। न हि वेदव्याख्यानरूपतामात्रेण तेषां स्वातन्त्र्यापहारः। ॐकार-व्याख्यानरूपत्वेन समस्तवेदस्यापि तत्प्रसंगात्। अत इतिहासादिना जायमानस्य पुष्कलब्रह्मज्ञानस्य विना प्रमाणं दृष्टादृष्टसामर्थ्यवैकल्यं मा वादीः। शिक्षा-कल्पादि वेदाङ्गानां स्वातन्त्र्यस्याप्रमितत्वेन तद्विषये त्वदुक्तदूषणान्यापतन्तु। नैवं प्रकृते।

ननु वेदाध्ययनजन्यापातप्रतीत्यैव त्वदुक्तरीत्या वैराग्यादिसंभवे किमितिहासा-दिना? मैवम्। उपबृंहणत्वेन तस्यावश्यकत्वात्। तदुपबृंहित वेदजन्यज्ञान-स्यापातप्रतीतित्वाभावेन त्वद्रीत्यापि तेन वैराग्यजननं युक्तम्। ननु तर्हि विचार-वैफल्यम् (त.मा.पृ. १०) न, ज्ञानदार्ढ्यार्थं तदपेक्षणात्। अङ्गीकृतश्च त्वत्पूर्वा-चार्यैः ज्ञानभक्त्योः पर्वभेदः। तथाहि 'भक्त्या त्वनन्यया शक्य' इत्यत्र गीताभाष्य तात्पर्यचन्द्रिकायां पर्वभेदभिन्नाया भक्तेः शास्त्रजन्यज्ञानोत्पत्तौ साक्षात्कारे प्रवेशे च पृथग् हेतुत्वम् अन्यथान्योन्याश्रयादित्युक्तम्।

किंच तृतीयाध्यायवैराग्यपादे प्राप्यवस्तुव्यतिरिक्तवैतृष्ण्यार्थं लोकान्तरेषु संचरतो दोषाः प्रतिपाद्यन्ते इति त्वन्मतम्। तच्च फलीभूतवैतृष्ण्ये कर्मविचारजन्य-वैतृष्ण्यापेक्षयातिशयविशेषमंगीकृत्यैवोपपादनीयम्। अन्यथा अन्योन्याश्रयात्। तद-स्माकमपि समानमिति न विचारवैफल्यम्।

यदुक्तं (त.मा.पृ. १०) आपाततः प्रतीतार्थनिर्णिनीषया प्रयतमानस्येतिहासादि-श्रवणावसराभावादिति, तत् सूत्रग्रन्थानवलोकनमूलम्। 'स्मर्यमाणमनुमानं स्यादि'त्यादिषु बहुस्थलेषु इतिहासादीनां निर्णायकत्वेनोपादानात् ब्रह्ममीमांसाध्ययनात्पूर्वं-

मितिहासादिश्रवणस्यावश्यकत्वात्। अन्यथा ब्रह्ममीमांसायाः त्वन्मते पूर्वमीमांसान्यायोपजीवित्वेऽपि तत्पूर्वं कर्मविचारावसरो नेति स्यात् । एतेन शास्त्रान्तर श्रवणव्यवधाननैरपेक्ष्यद्योतनार्थत्वेन सौत्राथशब्दसार्थक्योपपादनमपि श्रुतप्रकाशिकाया मनुपपन्नम्। इतिहासश्रवणव्यवधानापेक्षताया उक्तरीत्याऽपलपितुमशक्यत्वात्।

किंच ब्रह्मज्ञानानन्तस्थिरफलत्वापातप्रतीतेरपि कोटयंतराविषयकसम्भावनात्मकत्व एव विचारप्रवर्तकत्वम्। तच्च कर्मविचारजन्येन वा 'तद्यथह कर्मचित' इत्यादिश्रुतिमूलकेन वा फलत्वावच्छेदेन सान्तत्वज्ञानेन प्रतिबद्धं हितैषिपित्रादिवाक्यस्य वा इतिहासादेर्वा श्रवणमपेक्षते, न पुनः ब्रह्मविचारमिति अन्योन्याश्रयपरिहारस्त्वत्पक्षे। एवं चास्मत्पक्षेऽपि हितैषिपित्रादिवाक्येन वा इतिहासादिना वा वैराग्योपयोगिज्ञानोत्पत्तिः सूपपादेति नान्योन्याश्रयः। तच्च ज्ञानं संभावनात्मकं चेदस्तु। निष्फलत्वसंभावनापि वैराग्यहेतुरिति पूर्वमेवोक्तत्वात्।

किंच 'नाम ब्रह्मेत्युपास्त' इत्यादि श्रुत्याऽऽपाततोऽन्यथोपासनया अपि सफलत्वप्रतीतेः ब्रह्मणोऽन्यथोपासनयापि अनन्तस्थिरफल संभवात् ब्रह्मस्वरूपयाथार्थ्य निर्णयार्थो विचारो नावश्यक इति बुद्धया विचार प्रवृत्तिप्रतिबन्धे 'न प्रतीके न हि स' इति सूत्रविचारोऽपेक्षितः। तथाचान्योन्याश्रयः। तत्र तव यत् समाधानं तदस्माकमपि समानम्।

किं चापशूद्राधिकारे ज्ञातेऽशूद्रस्यैवेतच्छास्त्रे प्रवृत्तिः प्रवृत्तया चापशूद्राधिकारज्ञानमित्यन्योन्याश्रयः चन्द्रिकोद्भावितः अपरिहार्यः। यदत्रोक्तं (त. मा. पृ. १०) स्वाधिकारज्ञानस्यैव स्वप्रवृत्तौ उपयोगित्वेनान्यानधिकारज्ञानस्य तत्रानुपयोगित्वादिति तदसंगतम्। स्वाधिकारनिश्चयस्यैव प्रवर्तकत्वेन स्वस्याशूद्रत्वेऽधिकारो नान्यथेति विमर्शार्थं शूद्रस्यानधिकार ज्ञानस्यापेक्षितत्वात्। अन्यथा शूद्रस्यापि प्रवृत्तिप्रसंगाच्च। न च ब्राह्मणस्यैवोपनयनाधिकारात् तस्यैवाध्ययनेनापात प्रतीतिसंभवात् शूद्रस्य तदभावान्न प्रवृत्तिरिति (त.मा. पृ. १०) वाच्यम्। शूद्रस्यापीतिहासादिनापातप्रतितेरुपपादितत्वात्। ब्राह्मणस्यापि कृताध्ययनस्य शूद्रत्वापादककर्माणि कृतवतः आपातप्रतीतिसत्वेन विचारप्रवृत्तिप्रसंगाच्च।

यदपि कर्मस्वपशूद्राधिकारनिर्णये तदङ्गकोपासनायामपि तत एवापशूद्रादिकारसिद्धौ पुनरत्रापशूद्राधिकरण वैयर्थ्यमिति दोषपरिहाराय जानश्रुतिम् 'आजाहारेमाः शूद्रे'त्यामन्त्र्य ब्रह्मविद्योपदेशेन उपासनां स्ववर्णाश्रमोचितकर्मभिः संस्कृताः शूद्रा अपि किं न कुर्युरित्यभ्यधिकाशंकया तदारम्भेपपादनं (त. मा. पृ १०) तत्तु वैराग्यादिजनकपुराणादिश्रवणेनैव ब्रह्मज्ञानोत्पत्तावपि अभ्यधिकाशंकया ब्रह्मविचारारम्भोपपत्तिमसहमानस्य तव न शोभावहम्।

यदुक्तं 'तस्मादेवंवित् शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽत्मन्येवात्मानं पश्येदि'ति श्रुतौ एवंविदित्युक्त्या तत्साक्षात्कारतापत्तिमात्मन्येवात्मानं पश्येदित्यभिधास्यामानां प्रत्युपायतयैव शमादेरभिधानादिति (त.मा.पृ. १०) तत्रोच्यते। एतावता निदिध्यासनस्य शमाद्यधिकारानन्तर्यं त्वयोक्तम्। तदेव निदिध्यासनं सूत्रे विषयवाक्येच जिज्ञासापदेनोक्तमिति शमाद्यानन्तर्यस्याथशब्दार्थतानिराकरणं तव न युक्तम्। विषयवाक्ये हि 'तद्विजिज्ञासस्वे'ति पित्रादिष्टेन भृगुणा तपः कृतमिति प्रतीयते 'स तपोऽतप्यत' इति। तपश्च रूढया ध्येये मनोवृत्त्यवस्थानरूप मानसं तप एव भवितुमर्हति। 'अन्नं ब्रह्मेति व्यजानादि'त्यादिषूच्यमानसाक्षात्कारहेतुतापि तपसो निदिध्यासनरूपतामेव गमयति। एवं च जिज्ञासा निधिध्यासनरूपा श्रुतौ विवक्षिता। सूत्रेऽपि अथशब्देन तादृश जिज्ञासायाः त्वत्संमतशमाद्यानन्तार्योक्तिरेवास्तु। किं च 'प्रशान्तचित्ताय शमान्विताय प्रोवाचे'ति शमादेः श्रवणपूर्वभावित्वोक्तेः शमादिपूर्वकश्रवणस्य मननाधिकारत्वं स्पष्टम्।

यदपि परीक्ष्येति कर्मविचारप्राग्भावमभिधाय तत्प्रयुक्त वैराग्यस्यैव प्रशान्तचित्तायेत्यादिनाभिधानात् 'नास्त्यकृतः कृतेने'ति कर्मणां मोक्षोपायतां निरस्य तेषां चित्तनैर्मल्यहेतुताया एव प्रशान्तचित्तायेति प्रतिपादनाच्च कर्मविचारहेतुताया एव स्थिरीकरणाच्चेति (त.मा.पृ. १०) तदप्यसंगतम् श्रुतौ कर्मविचारप्रयुक्तवैराग्यस्य ब्रह्मकाण्डश्रवणोपयोगित्वमुच्यते। त्वया तु ब्रह्मविचारोपयोगित्वमिति। ब्रह्म प्रोवाचेत्यत्र ब्रह्मकाण्डप्रवचनरूपमुख्यार्थं विहाय ब्रह्ममीमांसाप्रवचनरूपामुख्यार्थकल्पने हेत्वभावात्। किं च विचारस्य कर्मविचारजनितचित्तनैर्मल्यापेक्षत्वे निरपेक्षसामग्रीत्वं कर्मविचारस्य श्रुतप्रकाशोक्तं व्याहन्येत। अपि च विचारापेक्षितस्य शमादेः चित्तनैर्मल्यादिरूपत्वे 'शमो मन्निष्ठता बुद्धेरि'त्यादिभागवत विरोधः। तदनुरोधेन तदुक्तशमादेरेव विचाराधिकारत्वमंगीकृत्य पर्वभेदावलम्बेनान्योन्याश्रयपरिहार संभवे चित्तनैर्मल्याद्यर्थकतया श्रुतिव्याख्यानमयुक्तम्। एतेन श्रवणोपयोग्यवधानमात्रस्य विवक्षितत्वात्पूर्ववृत्तत्वं युज्यत इति श्रुतप्रकाशोक्तमपि निरस्तम्।

किं च शमाद्यन्तर्गतस्याध्ययनस्य साक्षाद्विषयवाक्य एव 'अधीहि भगवो ब्रह्मेति तस्मा एतत्प्रोवाचे' ति ब्रह्मविचाराधिकारत्वोक्तेः तत्परित्यागिनस्तवाहो दुराग्रहः। यदप्युक्तम्–एतेनानन्तर्येऽधिकारस्य मङ्गलार्थे तथैव च। अथशब्द इति पुराणवचनोदाहरणमपि गलहस्तितम्। किं च कोऽयमधिकारो नाम? यद्युक्तवैराग्यादिकमेव तद् गृह्णीमः। यदि साधनचतुष्टयसंपत्तिः तत्र बहवो दोषाः प्राचीन ग्रन्थेषूक्ता आपतिष्यन्ति। यदि च शान्तो दान्त इति श्रुत्युक्तशान्त्यादिकमेव तदापि किं तद्

ब्रह्मविचारायत्तं कर्मविचारायत्तं वा ? आद्ये इतरेतराश्रयणम्। द्वितीये तद्धेतोरेवेति न्यायात् कर्मविचारस्यैव तद्धेतुत्वं युक्तमिति (त. मा. पृ. १०)—तत्रेदं प्रष्टव्यम् किमिदं पुराणवचनमेवाप्रमाणमुत प्रमाणत्वेपि अस्मदुक्तार्थेऽप्रमाणम् ? नाद्यः। वेदोप बृंहणत्वेन स्वीकृतानां पुराणानामप्रामाण्यकथनस्य व्याहतत्वात्। अत एव त्वदुक्ता-न्योन्याश्रयदोषस्याभासत्वसिद्धेश्च। दोषपरिहारक्रमस्य दर्शितत्वाच्च। न द्वितीयः। 'यद्युक्तवैराग्यादिकमेव तद्‌गृह्णीम' इति त्वद्वचनस्य रिक्तत्वात्। तथाहि किं तदधि-कारत्वेन गृह्णासि उताथशब्दार्थत्वेनापि ? न तावद् द्वितीयः, अतःशब्देनापि तस्यैव हेतुत्वेन परामर्शापातात्। अन्यथाथशब्दोक्तस्यैव हेतुत्वेन परामर्शोऽतःशब्देनेति त्वन्मतभङ्गात्। नाद्यः। पुराणोक्तं वैराग्यादेरधिकारत्वं स्वीकृत्यापि अथशब्दार्थ-त्वानङ्गीकारे पुराणविरोधापरिहारेण 'भक्षितेऽपि लशुने न शान्तो व्याधि'रिति न्यायापातात्। कर्मविचारायत्तशान्त्यादेस्त्वदुक्ततद्धेतोरेवेतिन्याय विषयत्वे तद्वदेव वैराग्यादेरपि विचाराधिकारत्वानुपपत्तेः, तदुपेक्षायां हेत्वभावाच्च। वैराग्यादीत्या दिपदोक्तशान्त्यादेरधिकारत्वमङ्गीकृत्य तस्यैव तद्धेतोरेवेति न्यायविषयत्वोक्तौ स्वव्या हतेश्च। अथातो धर्मजिज्ञासेत्यत्र धर्मपदं ब्रह्मपरमपीति श्रुतप्रकाशोक्तदिशा ब्रह्म विचारं प्रत्यपि अथशब्दोक्ताध्ययनस्याधिकारत्वप्राप्तौ तन्निषेधायोगाच्च।

ननु अध्ययनस्याधिकारत्वाभ्युपगमे कर्मविचारात्पूर्वमेव ब्रह्मविचारप्रवृत्त्यापत्ति-रिति चेत्, मैवम्। इष्टापत्तेः। उत्कटकर्मजिज्ञासारूपप्रतिबन्धकसत्वेन प्रवृत्त्ययोगान्ने ष्टापत्तिरिति चेत्कर्मविचारानन्तरमपि उत्कट कामिनीजिज्ञासारूपप्रतिबन्धकसंभवात् तद्विचारस्यापि ब्रह्मविचारहेतुत्वं स्यात्। अतोध्ययनशान्त्यादिकमेवाधिकारत्वेनाथ-शब्दार्थत्वेन च ग्राह्यं युक्तत्वात् पुराणप्रमितत्वाच्च, न कर्म विचारः। अयुक्तत्वाद-प्रामाणिकत्वाच्च।

एवं च पूर्ववृत्तात्कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्म ज्ञातव्यमिति त्वद्भाष्य-मनर्थकम्। अप्रतिपत्त्यन्यथाप्रतिपत्त्योरनिरासात्। त्वदुक्तरीत्या पूर्वोत्तरमीमांसा-त्वेन प्रसिद्धयोः कर्मब्रह्मविचारयोः पौर्वापर्यस्य लोकप्रसिद्ध्यैवावगतत्वेनाप्रतिपत्ते-रन्यथाप्रतिपत्ते र्वाऽभावात्। न चैतावतास्य प्रामाणिकत्वं मयाङ्गीकार्यम्। ऐक-शास्त्र्यस्यासंभवित्वेन पूर्वोत्तरमीमांसात्वप्रसिद्धेरज्ञप्रसिद्धित्वांगीकारात्। विचारे त्व न्यथाप्रतिपत्तिनिरासकत्वं त्वद्भाष्यस्य व्याहतम्। अस्मदुक्तयुक्तिभिरन्यथाप्रतिपत्ति-हेतुत्वस्यैव स्थिरीकरणात्।

एवमथशब्दस्याधिकारानन्तर्यार्थत्वे स्थिते यदुक्तम् (त. मा. पृ. ११) अधिकारस्य ब्रह्मविचारहेतुत्वमाकस्मिकं स्यात्। न चानन्तर्योक्त्यैव तल्लाभः। 'हृदयस्याग्रेव-

द्यत्यथ जिह्वाया' इतिवत् क्रमार्थेनाप्युपपत्तेरिति तदसंगतम्। अधिकारस्य विचार-हेतुत्वविषये विवादाभावेन तत्र न्यायाप्रवृत्तेः सूत्रे तदुक्तेरनावश्यकत्वात्। श्रौतमर्थं न्यायेन समर्थयितुं हि विचारशास्त्रप्रवृत्तिः। यत्र संशयस्तत्रैव च न्यायप्रवृत्तिः। अधिकारः क इत्यत्रास्ति संशयः। तदर्थं युक्तमधिकारकीर्तनम्। तथाहि संशयः—यदि मुमुक्षुत्वमात्रमधिकारस्तर्हि शूद्रस्यापि प्रवृत्तिप्रसंगः। यद्यध्ययनमपि तदाप्यन्याय्याध्ययनवतः शूद्रस्य प्रवृत्तिप्रसंगतादवस्थ्यम्। अतो न्याय्याध्ययनं मुमुक्षुत्वं चाधिकार इति निर्णयार्थं सूत्रे तदुक्तिर्युक्ता। नन्वेवमपि न्याय्याध्ययनवतो मुमुक्षोरपि कर्मविचारात्पूर्वमेव ब्रह्म विचारे प्रवृत्तिः स्यादिति चेत् किं छिन्नम् उक्ताधिकारसद्भावे कर्मविचारात्पूर्वमपि ब्रह्मविचारकरणस्यानिषिद्धत्वात्। अतोधिकारानन्तर्यार्थत्वेऽथशब्दास्य न किंचिद्बाधकम्।

यदप्यतः शब्दपरामृष्टव्यस्य यतो नारायणप्रसादमृते न मोक्षः इत्यादेरध्याहारमसहमानेनोक्तं (त.मा.पृ ११) अध्याहारस्यैवाकांक्षाधीनस्येहाप्रमाणिकत्वात् अनध्याहेरेणैवोपपत्तावध्याहारकल्पनायोगाच्च। स्रुवेणावद्यतीत्यत्र द्रवद्रव्यमितिव दित्यध्याहारे दृष्टान्त कथनमप्ययुक्तम्। अर्थाद्वा कल्पनैकदेशत्वादिति सामर्थ्यसनाथेनावद्यतिनैव द्रवद्रव्यांवदानस्य प्रतिपादनेनाध्याहारानपेक्षत्वादिति। तत्रोच्यते। यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितमिति प्रमाणानुसारेणान्यथानुपपत्तिमालोच्यैव तदुपपादकं भाष्येऽध्याहृतम्। तदभावे हि सुखसाध्येन कर्मणैव ज्ञानस्य मोक्षहेतु प्रसादस्य च लाभे किं श्रमसाध्यया ब्रह्मजिज्ञासयेति शंका स्यात्। अर्थाद्वेति सूत्रस्यान्यथा व्याख्यानं भाट्टसंप्रदायापरिज्ञानमूलकम्। अर्थात् विधिसामर्थ्यात् कल्पनापि स्रुवेणाज्यमित्यादि कल्पितवाक्यमपि श्रुतशब्दैकदेशत्वात् प्रमाणमिति हि तदुक्तोऽर्थः।

किंचान्यथानुपपत्तौ नाध्याहारश्चेत्कुत्र स इति वक्तव्यम्। वाक्यापरिसमाप्ताविति चेत् प्रथम सूत्रे न कर्तव्येत्यध्याह्रियताम्। तेनापि वाक्यपरिसमाप्तेः। तथा सति वाक्यार्थानुपपत्तिः, अथातःशब्दोक्त कर्मविचारहेतुत्वादेः कर्तव्यत्वव्याप्यात्वादिति चेत् हन्त तर्हि तयैव व्याप्त्या कर्तव्यत्वलाभेन कर्तव्येत्यपि नाध्याहार्यम्। न चेष्टापत्तिः। कर्तव्यतायाः क्वान्वय इत्युत्तरत्र (त. मा. पृ. १४) करिष्यमाणान्वयविचाराप्रसक्तेः। अध्याहाराभावे कर्तव्यताया अपदार्थत्वात्। न ह्यपदार्थस्य पदार्थेऽन्वयः चिन्त्यते। पदार्थैकदेशे पदार्थान्वयविरोधादित्याक्षिप्तेन त्वया कर्तव्यत्वस्यापदार्थत्वानुक्तेः पदार्थत्वाभ्युपगम सिद्ध्या तदर्थमध्याहारस्यावश्यकत्वाच्च। यदि सत्यां चान्यथानुपपत्त्यां तदुपपादकाध्याहारं विना यत्र वाक्यापरिसमाप्तिस्तत्राध्याहारः तदा प्रकृते यतो

नारायणप्रसादमृते न मोक्ष इत्याद्यध्याहारं विना वाक्यापरिसमाप्तेर्वाक्यार्थानुपपत्तेश्च तदध्याहार आवश्यक इति पश्यतु भवान्। अथशब्दप्रकृतं परामृश्यैव निराकांक्षोऽतः शब्दः इति तु प्रागेव निरस्तम्।

प्रसाद मोक्षहेतुत्वाभिधानवैफल्यमपि कर्मणैव ज्ञानप्रसादादि लाभशंकावारणार्थत्वोक्त्या पूर्वमेव प्रत्युक्तम्। यदपि तमेवं विद्वानमृत इह भवतीति प्रमाणानुसारेण ज्ञानहेतुत्वस्यैव वक्तव्यत्वे तदुपेक्षाहेत्वभावादिति (त.मा.पृ. ११) तदतीव मन्दम्। किमायुष्मता यागस्वर्गयोरपि यथाश्रुत साक्षात्साधनसाध्य भावो गृह्यते? तत्रापूर्व द्वारकत्वं कल्प्यते। अन्यथा सद्यः स्वर्गोपलम्भप्रसंग इति चेदत्रापि प्रसाद द्वारकत्वं कल्प्यमन्यथा सद्यो मोक्षोपलम्भप्रसंग इति। एतेन प्रसादमोक्षहेतुत्वादेः शब्दानवगतत्वोक्तिरपि परास्ता।

**मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि।**
**मत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥**
**जुष्टस्ततस्तेनामृतत्वमेति॥**

इत्यादिषु प्रसादमोक्षहेतुत्वादेरुद्घोषणाच्च।

यदपि जन्माद्यस्य यत इत्यत्र प्रत्यक्षावगत विविध विचित्र रचनास्पद स्थिरत्रसादिभेद भिदुरत्व सूचनेन तथाविधजगन्निर्माणस्य ब्रह्मासाधारण्य प्रतिपत्तये इदंशब्देन निर्देश इति (त.मा.पृ. ११) तदपि तुच्छम्। अत्यल्पविषय प्रत्यक्षावगत जगन्निर्माणस्य विश्वामित्रादावपि संभावितस्य ब्रह्मासाधारण्य प्रतिपत्त्यसंभवात्। यदपि अतःशब्दस्य प्रमित प्रसादहेतुत्वादिपरामर्शकत्व स्वीकारे क्वाचित्कागतिकगत्याश्रयणापादनं तत्त्वापि तुल्यम्। इदंशब्देन उक्तवक्ष्यमाणादि परामर्श दर्शनेन निर्दिष्ट प्रतिनिर्देशत्वस्यापि त्वयोच्यमानस्य क्वाचित्कत्वात्।

यदुक्तं अधिकारानन्तर्योक्त्यैव तद्धेतुत्वलाभं वदतामिहापि मुमुक्षुभिः कर्तव्यता कथनेन तन्मोक्षहेतुत्वस्यार्थसिद्धतया तदभिधान वैफल्यमिति (त.मा.पृ. ११) तदप्यसारम्। अधिकारानन्तर्योक्त्या सामान्यतो मोक्षहेतुत्वलाभेपि प्रसादद्वारा तद्धेतुत्वस्य विवक्षितस्य

**यस्य प्रसादात् परमार्तिरूपाद्**
**अस्मात् संसारान्मुच्यते नापरेण।**
**नारायणोसौ परमो विचिन्त्यो**
**मुमुक्षुभिः कर्मपाशादमुष्मात्॥**

इत्येतत्सूत्र निर्णेतव्य विधिवाक्येनैवोपस्थापितस्यातःशब्देन परामर्शं विनाऽसिद्धेः।

यदप्युक्तमुदाहृत श्रुतावपि विचारमोक्षहेतुत्वस्य कण्ठतोनभिधानेनार्थिकतया अतःशब्देन तदनुवादायोगाच्च। विचिन्त्य इति ध्यानस्य मोक्षहेतुत्वस्य ततो लाभेपि विचारमोक्षहेतुत्वाप्रतिपत्तेश्चेति (त.मा.पृ. ११) तदपि दुराग्रहमात्रम्। तदर्थं चिन्तेत्यादि प्रयोगेषु विचारार्थकतया चितिधातु प्रसिद्धया विचिन्त्य इत्यनेनैव ध्यानस्येव विचारस्याप्युक्तौ बाधकाभावात्। श्रुतावर्थाल्लाभस्य सूत्रेऽनुवादायोगं प्रत्यप्रयोजकत्वाच्च।

यदप्युक्तमेतेन मीमांसाङ्गभूत ब्रह्मतर्के प्रकृतत्वात् सिद्धव्युत्पत्त्यादिकमिव विचार-मोक्षहेतुत्वमतःशब्दार्थ इति निरस्तम्। तत एवेतरव्यावृत्त ब्रह्मस्वरूपप्रतिपत्तौ विचारवैफल्याच्च। निदिध्यासनस्यैव मोक्षहेतुतया विचारस्य तदर्थस्यान्यथासिद्धस्य मोक्षहेतुत्वासिद्धेश्चेति (त.मा.पृ. १२) तदप्यसंगतम्। अङ्गभूतब्रह्मतर्केणाङ्गिनो वैफल्यकथनायोगात्। मोक्षहेतुतायां द्वारभूतनिदिध्यासनेन द्वारिणो विचारस्यान्यथा सिद्धिकथनायोगाच्च। अन्यथा तवापि विशिष्ट प्रतीत्यर्थस्य कर्मविचारस्य ब्रह्म विचारं प्रत्यन्यथासिद्धत्वापत्तेः। अस्तु वान्यथासिद्धयाऽहेतुत्वम्। प्रयोजकत्वं तु नापलापार्हम्। तावतापि विचारकर्तव्यत्वं प्रति ज्ञापकत्वरूपं हेतुत्वं निराबाध मतःशब्देनाभिधीयताम् । एतेनैव सामान्यतो ज्ञाते विशेषतश्च वेदितव्ये सर्वत्र जिज्ञासा। तत्र च विशेष ज्ञान फलकत्वमेव हेतुः न तु मोक्षजनकत्वमित्यपि (त.मा.पृ. १२) निरस्तम्। स्वयमपुरुषार्थोपि विशेष ज्ञानं फलम्। स्वयं पुरुषार्थोपि मोक्षो न फलमित्यस्योन्मत्तभाषितत्वाच्च। विवादाभावेन निर्णयानपेक्षत्वेपि विचारस्य विशेष ज्ञानजनकत्वं सूत्रे वक्तव्यम् विवादेन निर्णयापेक्षत्वेपि विचारस्य मोक्षोजनकत्वं निर्णयके सूत्रे न वक्तव्यमित्यस्य व्याहतत्वाच्च।

एतच्छब्दस्य वक्ष्यमाण परत्वे अतो भगवत इत्यर्थ इति तु (त.मा.पृ.१२) असदनुवादः। चन्द्रिकोक्तदिशा भगवतः प्रसादादिद्वारा मोक्षदत्वस्यातःशब्देन परामर्श इति स्वीकारात्।

प्रकरणविच्छेदकाथशब्दबल लभ्यत्वं वक्ष्यमाणपरत्वस्येति च (त.मा.पृ. १२) न युक्तम्। एतदुक्तं भवतीत्यादिप्रयोगेषु प्रकरणविच्छेदकाथशब्दं विनैवैतच्छब्दस्य वक्ष्यमाणपरत्व दर्शनात्। संज्ञा चोत्पत्तिसंयोगादित्यत्र प्रकरणविच्छेदकाथशब्द-प्रदर्शनं तु पूर्वप्रकृतपरामर्शित्वशंकानिरासार्थम्। न तु वक्ष्यमाणपरत्व सिध्यर्थम्।

सर्वसाधारणस्य भगवद्धेतुत्वस्य जिज्ञासायां विशिष्य कीर्तनवैयर्थ्यं (त.मा.पृ. १२) न विचारसहम्। अध्ययनादिकमधिकारश्चेत्तद्विशिष्टैः सर्वैरपि ब्रह्म

विचार्येतेति शंकायां भगवत्प्रसादवैकल्यान्नैवमिति वक्तुं भगवद्धेतुत्वोक्तेरावश्यक-त्वात्। श्रुतप्रकाशिकायामपि ननु कर्मविचारो ब्रह्मविचारस्य निरपेक्षहेतुश्चेत् कृतकर्मविचारैः सर्वैरपि ब्रह्मविचार्येता मैवम्। तेषामदृष्टवैगुण्यादिति सर्वसाधारण-स्यादृष्टहेतुत्वस्य जिज्ञासायां विशिष्य कीर्तितत्वेन त्वत्पूर्वाचार्याणामपि व्यर्थभा षित्वापत्तेश्च।

जन्मादिसूत्रे सृष्ट्याद्यष्टकर्तृत्वाभिधानेन विशिष्य मोक्षप्रदत्व मात्रेणातःशब्देन ब्रह्मोपस्थापनानियामकानुपलब्धिरिति च (त. मा. पृ.१२) नैष स्थाणोरपराध इति न्याय पराहतम्। जन्मादिसूत्रे मुख्यतया मोक्षप्रदत्वं तत्संभावनार्थं च सृष्ट्याद्यष्ट-कर्तृत्वं प्रतिपिपादयिषितमिति अनुव्याख्यानोक्तेः।

जिज्ञासापदेन ब्रह्मवाचकातःशब्दसमभिव्याहारात्तज्जिज्ञासाया एव लाभे ब्रह्म-पदवैयर्थ्यम् (त. मा. पृ. १२) इत्यपि न मनोरमम्। विषयाभावपूर्वपक्षनिरासाय जीवातिरिक्तगुणपूर्णब्रह्मरूपविषयस्य तथा उक्तगुणपूर्णत्वसमर्थनाय सकलवैदिक शब्द समन्वय प्रदर्शकस्याद्याध्यायस्य प्रवृत्तेश्च वक्तव्यत्वात्। योगेन गुणपूर्णत्वबोधक ब्रह्मपदप्रयोगं विना तस्याशक्यत्वात्। ब्रह्मवाचकातःशब्दमात्रेण तद्वैयर्थ्यापादनस्य व्यधिकरणत्वात्।

यदप्यतःशब्दस्य जन्मादिसूत्र प्रतिपन्न कारणत्व मोक्षप्रदत्वोपहितपरत्वे तत एव जीववैलक्षण्यसिद्धेः पुनर्जीवपरत्वशंकानुत्थानमिति।– तदप्ययुक्तम् जीवपरत्व शंकानिरासार्थं ब्रह्मशब्दातःशब्दाभ्यामनेकहेतूक्तौ बाधकाभावात्। दाढर्यापाद कत्वेनेष्टत्वाच्च। ब्रह्मणोऽन्तरङ्गलक्षणं गुणपूर्णत्वं प्रथमं ज्ञात्वा पश्चादितरत् कार णत्वादि च विमृश्य जीवपरत्व शंकां त्यजति पूर्वपक्षीति क्रमेण हेतुद्वयस्यापि संगतेश्च। एतेनैव किमत्र ब्रह्मगत मोक्षप्रदत्वं हेतुः किंवा मोक्षप्रदब्रह्मविषयकत्वं। नाद्यः व्यधि करणत्वात्। न द्वितीयः ततएव जिज्ञासाया ब्रह्मविषयकत्वलाभे ब्रह्मपदवैयर्थ्या दित्यपि (त.मा.पृ. १२) निरस्तम्। ब्रह्मपदसार्थक्यस्योक्तत्वात् ब्रह्म विजिज्ञास्यं मोक्षप्रदत्वादिति प्रयोगे वैयधिकरण्यानवकाशाच्च।

यदप्युक्तं ब्रह्मविषयकत्वाद् ब्रह्मविषयक जिज्ञासा कार्येत्युक्ते व्यर्थविशेषण त्वादिति (त.मा.पृ. १२) तदनर्थकम्। कामिनीजिज्ञासाव्यावर्तनेनापि विशेषण सार्थक्य संभवात्। हेतुपक्षतावच्छेदकैक्यं तु शक्यत उद्भावयितुम्। ब्रह्मविषयक जिज्ञासा कार्या मोक्षप्रदब्रह्मविषयकत्वादिति प्रयोगे तदप्यशक्यम्। वस्तुतस्तु तद्वि जिज्ञासस्वेति श्रुत्युक्त जिज्ञासा कर्तव्या ब्रह्मविषयकत्वादिति प्रयोगस्यास्मत्संमतत्वेनानु क्तोपालम्भ एवायमिति विभावनीयम्।

मोक्षस्य फलत्वमतःशब्देन हेतूक्रियते इत्यत्र यदुक्तम् मुमुक्षानन्तर्याभिधानात् तद्धेतुत्वस्येव तद्विषयफलत्वस्यापि सिद्धतया पृथगभिधानवैफल्यमिति (त.मा.पृ. १२) तदप्ययुक्तम्। विचारे मोक्षफलत्व सिद्धावपि तत्कर्तव्यत्वे मोक्षफलत्व ज्ञाप्यत्वस्या सिद्धेः। वस्तुतस्तु तवैवायं दोषः। आनन्तर्योक्तिलभ्यस्यैव हेतुत्वस्य त्वयातःशब्दोक्त त्वाङ्गीकारात्, अस्माभिस्त्वानन्तर्योक्तिलभ्यकारकहेतुत्वादन्यस्य ज्ञापकहेतुत्वस्यैवातः शब्दोक्तत्वाङ्गीकारात्।

यदप्यधिकारादेरप्यतःशब्देनैव लाभसंभवेनाथशब्दवैयर्थ्यापत्तेः। अथ सिद्धत्वा सिद्धत्वाभ्यां शमादेर्मुक्तेश्च वैलक्षण्यद्योतनायेह पृथगुक्तिरिति चेन्मैवम्। तत्प्रती त्यापि प्रयोजनाभावादिति (त.मा.पृ. १२) तदपि न चारु। स्वर्गादिसाधने ज्योति ष्टोमादौ यथा तत्कामस्त्रैवर्णिकोधिकारी तथा विचारस्य सत्यपि विषये फले च मुमुक्षु स्त्रैवर्णिकोधिकारी न तु शान्त्यादिकमपि तद्विशेषणमिति शंका राजसूयादौ राजत्वा दिरिव वचनाच्छान्त्यादिरपि तद्विशेषणमिति सूचयताथशब्देन परिहृता इत्यादि चन्द्रिकोक्तेरथातःशब्दवैयर्थ्यं शंकायोगात्। सिद्धत्वासिद्धत्वाभ्यां वैलक्षण्यस्याभ्युच्च यत्वेनोक्तत्वाच्च। एतेनैव मुमुक्षाया अधिकारान्तर्भावेन तत एव मुक्तेरसिद्धतानिश्चये तदर्थमतःशब्देन तदुक्तिवैयर्थ्याच्च (त.मा.पृ. १२) इत्यपि प्रत्युक्तम्।

श्रवणकर्तव्यतापरस्य मननकर्तव्यतापरत्व कल्पनायोग इति (त.मा.पृ. १२) त्वद्वचनं तु त्वद्भाष्येणैव प्रत्युक्तम्। अधीतसाङ्ग सशिरस्कवेदस्येत्यत्र साङ्गपदेन गुरूपदिष्ट व्याकरणाद्युपबृंहित वेदवाक्यार्थ ज्ञानस्यास्मदभिमत श्रवणरूपस्य विचार-पूर्वभावित्वोक्तेः विचारस्य मननरूपत्वावश्यंभावेन सूत्रस्यापि मननकर्तव्यता-परत्वसिद्धेः। युक्त्यनुसंधानात्मकविचार एव यदि तव श्रवणपदार्थस्तर्हि सूत्रस्य तादृश श्रवणकर्तव्यतापरत्वं ममापीष्टमेव। नाम्नि विवादायोगात्। श्रुतार्थे मननस्य रागप्राप्ततया तद्विध्ययोगादित्यपि त्वद्भाष्येणैवेष्यमाणं ज्ञानमिह विधीयत इति वदता प्रत्युक्तम्।

यदप्युक्तम् किं प्रसाद एव हेतुः। किं वा मोक्षप्रसादसाध्यसाधनभावः। किं वा तज्ज्ञानम्। नाद्यः। व्यधिकरणत्वात्। ज्ञानसाध्यस्य तस्य ततः प्रागसिद्धेश्च। न द्वितीयः। स्वरूपसतस्तस्य हेतुत्वेतिप्रसंगात्। न तृतीयः। तस्य यमेवैष वृणुते तेन लभ्य इति वाक्यमात्रजन्यस्य श्रवणजन्यत्वाभावात्। श्रवणादि साधारणस्य तस्य मनने विशिष्य कीर्तन वैयर्थ्याच्चेति (त.मा.पृ. १२) तत्रोच्यते। मोक्षजनक प्रसाद-जनक ज्ञानजनकत्वस्य विचारकर्तव्यतां प्रति ज्ञापकहेतुत्वमङ्गीक्रियते। अतो न वैयधिकरण्यं न वाऽसिद्धिः। वाक्यमात्रजन्यस्य श्रवणजन्यत्वप्रतिषेधस्तवोक्तरीत्या नाम्नि कलहः। श्रवणादिसाधारणहेतो र्मनने कीर्तनं च तदसिद्धिपूर्वपक्ष निरासायेति।

यदपि बन्धस्य मिथ्यात्वेपि तन्निवर्तकाधिष्ठानयाथात्म्यज्ञानस्य श्रवणादि प्रणाडी जन्यत्वाभ्युपगमेन विचारारम्भोपपत्त्या तत्सत्यत्वादेस्तदहेतुत्वादिति (त.मा.पृ. १३) तदप्यसंगतम् एवमद्वैतिनां विचारारम्भोपपत्तावप्यावयोरगतेः। तव मते सत्यस्यैव निवृत्तिसंभवाद्, बन्धमिथ्यात्वे तन्निवृत्त्ययोगात् तन्निवृत्त्यर्था जिज्ञासा न कर्तव्येति शंकोदयात्। मन्मतेपि अद्वैतरीत्या बन्धमिथ्यात्वे तन्निवृत्ते र्ज्ञान मात्रसाध्यस्य प्रसादा नपेक्षत्वात् प्रसादार्था जिज्ञासा न कर्तव्येति शङ्कोदयात्। बन्धसत्यत्वेनैवोभयमतेपि विचारारम्भोपपत्तेर्वर्णनीयत्वात्।

यदपि अथशब्दस्यानन्तर्यमुपस्थापयतो नाधिकारानन्तर्यमर्थः। न चार्थात्प्रति-योगिलाभः। ऐकशास्त्र्यमङ्गीकुर्वतो मम कर्मविचारस्येव तव शमदमाद्यधिकारस्य प्रागप्रस्तुतत्वादिति (त.मा.पृ. १३) तत्रैवं भवान् प्रष्टव्यः। अथातो धर्मजिज्ञासेत्य-त्राथशब्देन प्रागप्रस्तुताध्ययनानन्तर्यं कथमुक्तमिति।

प्रशान्तचित्तायेत्यादि वाक्यानि श्रवणोपयुक्त चित्तावधान पराणि। शमादि-रूपाधिकारिविशेषणनिष्पत्तेर्विचारजन्यतत्वज्ञानाधीनत्वेनान्योन्याश्रयः। मनो हि विष येष्वनिष्टोपायतानिर्णयमन्तरेण न विषयानभिमुखं भवतीत्यादीनि बालवाक्यानि पूर्वमेव दूषितानि।

यच्चोक्तमापात प्रतीति मूलक प्रतीतिमभ्युपगच्छतो मम मते विचारवैयर्थ्याभावेन सकम्प प्रवृत्त्यभ्युपगमेपि बाधकाभावादिति (त.मा.पृ. १३) तत्रापि अनवधारणात्मक कर्माल्पास्थिरफलत्वज्ञानमात्रेण कर्मणो निवृत्त्यापत्तिरुक्तैव। किंच विचारे सकम्प प्रवृत्तिश्चेदुपासनायां सा कुतो न। उपासना कष्टसाध्येति चेत् राजसेवादावपि कष्टसाध्ये सा न स्यात्।

यदप्युक्तम् ब्रह्मरूपविषयस्यापि श्रवणेनैव सिद्धौ ब्रह्मशब्दवैयर्थ्यापत्तिरिति (त.मा.पृ. १४) तन्न। श्रवणसिद्ध ब्रह्मरूप विषयस्याप्यतःशब्देनैवोक्तिसंभवेपि स्पष्टतार्थं ब्रह्मशब्देनोक्तेः। ननु तर्हि स्पष्टतार्थं मोक्षजनक प्रसादजनकज्ञानजनक त्वादित्येवोच्यताम्। किमतःशब्देन। मैवम्।

**अथातःशब्दयोरेवं वीर्यमाज्ञाय तत्वतः।**
**सूत्रेषु तु महाप्राज्ञाः तावेवादौ प्रयुञ्जते ॥**

इति प्रमाणानुसारेणातःशब्दस्यैव प्रयोक्तव्यत्वात्। एतेनातःशब्देनैवाधिकारस्यापि परामर्शसंभवेऽथशब्दवैयर्थ्यमित्यपि निरस्तम्। अथातःशब्दयोर्द्वयोरपि प्रयोगस्य सांप्रदायिकत्वात्।

यदप्युक्तम्—मोक्षरूपप्रयोजन विश्वसत्यत्व सिद्धार्थ व्युत्पत्यादेर्युक्तिकलापस्य सिद्धासिद्धात्मकस्यात:शब्दार्थत्वाङ्गीकारात् अधिकारस्य सिद्धस्य प्रवृत्यङ्गत्वं प्रयोजनादेरसिद्धस्यापि बुद्धिस्थस्य तत्रापि विषयस्य नासिद्धत्वनियमः प्रयोजनस्य तु तन्नियम इति विशेषज्ञापनं क्रमेणाथातोब्रह्मशब्दैरिति न वक्तुं शक्यमिति (त.मा.पृ. १४) तत्रोच्यते। सिद्धत्वं प्रवृत्ति कारणीभूत पूर्ववृत्तित्वज्ञान विषयत्वम्। असिद्धत्वं प्रवृत्तिकारणीभूत वर्तमानत्व भविष्यत्वान्यतर प्रकारकज्ञानविषयत्वम्। अतः अधिकारस्य सिद्धत्वनियमः। प्रयोजनस्यासिद्धत्व नियमः। विषयस्य तु तदनियम इति युक्तम्। मोक्षस्य विश्व सत्यत्वादेश्च वर्तमानत्व भविष्यत्वान्यतर प्रकारेण ज्ञानस्य प्रवृत्ति कारणतया असिद्धत्वनियमान्न सांकर्यमिति।

यच्चोक्तं जिज्ञासा शब्दस्तावदिच्छासनन्तः प्रकृत्यर्थस्य ज्ञानस्येष्यमाणत्व मवगमयति। तच्चापुरुषार्थत्वान्न स्वतः इष्यमाणं भवति इति फलोपाधिकं तद्वाच्यमिति सामर्थ्यादेव फलवत्व ज्ञानलाभान्न तस्यातः शब्दार्थत्वं युक्तमिति (त.मा.पृ.१४) तदप्यापाततः। फलाभावेन विचारस्य कर्तव्यतां प्रतिक्षिपता पूर्वपक्षिणा ज्ञानस्येष्य माणतानङ्गीकारात् फलवत्त्वज्ञानालाभात्। अस्तु वा सामान्यतः फलवत्वज्ञान लाभः। मोक्षरूपफलवत्त्व ज्ञानलाभस्तु कुतः। किंच त्वन्मतेपि ब्रह्मज्ञान फलप्रत्ययस्य द्वारत्वाभ्युपगमेन तद्द्वारक कर्मविचार ब्रह्मविचार हेतुत्वस्यात:शब्दार्थत्व स्वीकारो व्यर्थएव।

वस्तुतस्तु मार्नेजिज्ञासायामित्यस्य व्याख्यावसरे मनोरमाशेखरादिषु जिज्ञासापदस्य विचारार्थकत्वोक्तेरिष्यमाणज्ञानार्थकत्व कल्पना तव निर्मूलैव। एतेनैव न ह्ययं मीमांसाशब्दवत् समुदायरूढ्या विचारपर इति केषांचित्कल्पना युक्ता। तद्वदिह विशेषविध्यभावात्। सामान्य विधेश्चेच्छार्थत्वव्यभिचारात्। शिक्षेर्जिज्ञासायामित्यत्र भाष्यकैयटतद्व्याख्याग्रन्थेषु ज्ञानेच्छापरत्वस्यैवाभिधानाच्च। मीमांसिषत इतिवत् जिज्ञासिषत इति सनन्तर प्रयोग प्रसंगाच्च। जिज्ञासमाना मुनिहोम धेनुरित्यादौ विचारार्थत्वादर्शनाच्च। तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातु मिच्छेन्मुमुक्षुरिति त्वदभिमत श्रुतिगत निर्वचन विरोधाच्च। तद्विजिज्ञासस्वेति तिङन्ते समुदायरूढ्यभावाच्च। अथातो धर्मजिज्ञासा अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासेत्यादि निर्देशव्याख्यापर बहुतर प्राचीनतान्त्रिकग्रन्थ विरोधाच्च। प्रोक्षणी न्यायेनावयव शक्त्यैवानतिप्रसक्ततया निर्वाहे समुदायरूढेरकल्प्यत्वाच्चेति (त.मा.पृ. १४) निरस्तम्। तव मते शरीरवाचकानां विशेष विध्यभावेपि प्रयोग प्रत्ययाभ्यामेव शरीरिषु समुदायरूढ्यङ्गीकारात् जिज्ञासा शब्दस्यापि तथैव समुदायरूढिसंभवाच्च

शब्दकल्पद्रुमे जिज्ञासितमधीतं चेति भागवत प्रयोगं प्रदर्श्य तत्र जिज्ञासितशब्दस्य विचारितमित्यर्थ कथनाच्च। भाष्यकैयटादि ग्रन्थेषु ज्ञानेच्छापरत्वोक्तिस्तवापि विरुद्धा। त्वया तद्विपरीतस्येष्यमाणज्ञानविशेषार्थकत्वस्याङ्गीकारात्। कर्तव्य-पदान्वयार्थं त्वया तत्स्वीकारे मयापि तदर्थमेव समुदायरूढ्या विचारार्थकता स्वीक्रियते। जिज्ञासिषत इति प्रयोगाभावः तादृशप्रयोगे इच्छाभावप्रयुक्तः। जिज्ञासमाना मुनिहोमधेनुरित्यत्र विचारार्थत्वे न किञ्चिद्बाधकम्। तस्मादेनमिति श्रुतावपि विचार्य चेति रूढ्यर्थोक्त्या निर्वचनपरत्वमेवासिद्धम्। अन्यथा विचारजन्य ज्ञानेच्छाया लाभेन त्वदभिमतविचारात्मकज्ञानेच्छार्थकत्वालाभ एव। तद्विजिज्ञासस्वेति तिङन्तेपि समुदायरूढिसत्वेन तदभावोक्तिरपि निर्मूला। अथातो धर्मजिज्ञासेत्यादि व्याख्यापर प्राचीन ग्रन्थेषु त्वदभिमतेष्यमाणज्ञानार्थत्वास्वीकारेण तद्विरोधस्तवापि तुल्यः। तेषामप्रामाण्येनाविरोधे ममापि को विरोधः। पङ्कजनिकर्तृविशेषरूपपक्षे अवयवशक्त्यानतिप्रसक्त्या निर्वाहे समुदायरूढित्यागापत्तिः। कर्तृ विशेषस्य योगेनालाभात् रूढ्याश्रयणं चेत् ज्ञानविशेषलाभार्थं रूढिरित्यस्तु।

यत्तु ज्ञानमिच्छां प्रति कर्मतया प्राधान्येनावगतं कथं विधेयं स्यात्। अन्यथा स्वर्गकामपदादिना इच्छाकर्मतया प्रतीतः स्वर्गादिरपि विधेयः स्यादिति चन्द्रिकोक्तदूषणमसहमानेनोक्तम् – उपादेयत्वासमानाधिकरण कर्मत्वावगतिरेव प्राधान्यावगमद्वारा विधेयत्वाभावप्रयोजिका। विचारस्योपादेयतया तत्समानाधिकरण तद्गतकर्मत्वावगतिर्न विधेयत्व विरोधिनीति (त.मा.पृ. १५) तत् श्रुतिश्चोपायदशाप्रभृति भगवज्ज्ञानस्य प्रीतिरूपत्वेन इच्छाविषयत्वात् तथा निर्दिशतीति श्रुतप्रकाशिका ग्रन्थानवलोकन मूलम्। प्रीतिरूपस्योपादेयत्वासंभवादविधेयत्वात्। अन्यथा स्वर्गादेरपि विधेयत्वापातात्। न चोपायदशाप्रभृत्येव ब्रह्मज्ञानस्य प्रीतिरूपत्वमुक्तम्। तादृशदशातः पूर्वं प्रीतिरूपत्वाभावात् तदोपादेयत्वोपपत्तिरिति वाच्यम्। जिज्ञासा-पदेन विचारस्यैवेच्छाविषयत्वोक्तेः तत्रैव प्रीतिरूपत्व लाभात्। उपायदशापदेनोपासनारूपोपायदशाविवक्षायां विचारे इच्छाविषयत्व कथनायोगात्।

एतेन यच्चोक्तम्-यथा फलेभ्यो वृक्षमारुरुक्षतीत्यादौ धात्वर्थातिरिक्तस्य फलादेरुद्देशान्तरस्य श्रवणान्न धात्वर्थस्य सन्प्रत्ययावगतमपीच्छाकर्मत्वं प्राधान्यमवगमयति तथेहापि ज्ञानस्य कर्मत्वावगमेपि परमपुरुषार्थरूपस्य ब्रह्मणः कर्मणि षष्ठ्या कर्मत्वावगमात्तस्यैव प्रमावैशिष्ट्येन प्रसादवत्वेनैवोद्देश्यतया प्राधान्यावगमादुद्देशान्तर सद्भावप्रयुक्तः प्राधान्यानवगमो ज्ञाधात्वर्थस्य युक्त इति विधेयत्वमेव तस्य स्वारसिकमिति (त.मा.पृ. १५) तदपि निरस्तम्। वृक्षारोहणस्य क्लेशरूपस्य प्रीतिरूपत्वा

भावेन प्राधान्यासंभवेपि भगवज्ज्ञानस्य प्रीतिरूपत्वेन प्राधान्यसंभवात्। उद्देशान्तर सद्भावात् प्राधान्यानवगम इति तु परम पुरुषार्थस्यापि ब्रह्मण: दु:खनिवृत्यर्थत्वेनोद्देश्यान्तर सद्भावादप्राधान्येन विधेयत्वापत्त्या कुशकाशावलम्बनमात्रम्।

प्रत्युतेयतापि प्रबन्धेन चन्द्रिकोक्तम्–"प्राङ्मुखो भुञ्जीतेत्यादौ विधेयप्राङ्मुखत्वादेराश्रयमर्पयितुं भुजिधातु: सार्थक:। प्रकृते तु विधेयज्ञानं प्रतीच्छाया आश्रयत्वाद्यभावात् तद्विजिज्ञासस्वेति श्रुतौ सूत्रे च सन्प्रत्ययो व्यर्थ" इति दूषणं न परिहृतम्।

यदत्रोक्तम्—तज्ज्ञानस्येष्टत्वसंपादनाय विचाररागप्राप्तिज्ञानाय च तत्सार्थक्यम्। न चैवं विधेयत्वानुपपत्ति:। अज्ञातज्ञापनरूप विध्यविघातात् अतएव ज्ञानेच्छापरत्वेपि विध्युपपत्तेस्तदर्थं समुदाय शक्तिकल्पना प्रत्युक्तेति (त.मा.पृ. १६) तदप्यविचारित रमणीयम्। रागत: प्राप्तेपि अज्ञातज्ञापनरूपविधे: श्रुतप्रकाशरीत्या पूर्वपक्षरीत्याऽनारम्भणीयत्वबुद्धौ सत्यामारम्भणीयत्वज्ञापनरूपत्वात् प्रकृते भगवज्ज्ञानस्य प्रीतिरूपत्वेनानारम्भणीयत्वात् आरम्भणीयत्वज्ञापनरूप विधेर्बाधात्। प्रीतिरूपत्वेपि विचारस्यारम्भणीयत्वं चेदिच्छया किमपराद्धम्। अत: तत्रैव कर्तव्यत्वान्वयापत्ति:। इष्टापत्तौ चाथातो धर्मजिज्ञासेत्यादि बहुस्थलेषु दृष्टस्य जिज्ञासाशब्दस्य विचार लाक्षणिकत्वस्य परित्यागरूपदोषस्तवाप्यापतेत् स एव चाथात:शब्दव्याख्यावसरे ममोपरि त्वयारोपित इति न विस्मरणीयम्। एवं च ज्ञानेच्छापरत्व समुदाय शक्तिपक्षयों: समदोषत्वमेव त्वया वक्तव्यम्। इच्छां विहाय विचार एव कर्तव्यपदार्थान्वयस्य बहुतान्त्रिक ग्रन्थसंमतत्वेन त्वयैवोक्तत्वात्।

किंच जिज्ञासापदस्य यौगिकत्वे समानार्थक बुभुत्सादिपद परित्यागेन नियमेन विचार शास्त्रेषु तत्प्रयोगे बीजाभाव:। रूढत्वेपि मीमांसादिपदैर्विनिगमनाविरहस्तु न शंक्य:। "अथातो दैवी मीमांसे" त्यादिषु तत्प्रयोगदर्शनात्। किंच मुख्यानि रूढपदानि विहायामुख्यानि यौगिकपदानि प्रयोजनविशेषार्थं प्रयोक्तव्यानीति तावत् वक्तव्यम्। जिज्ञासापदं यौगिकं चेत् तेन समानार्थक यौगिकपदान्तरालभ्यं किमपि प्रयोजनं वाच्यम्। अन्यथान्यस्यापि प्रयोगसंभवे विनिगमनाविरहशंका जायत एव। तर्हि रूढिपक्षेपि विनिगमनाविरह इति चेदस्य तर्कस्य विपर्यय पर्यवसानमशक्यम्। कथमन्यथाऽमुख्यप्रयोगस्य सप्रयोजनत्वसिद्धि:। यद्यप्यस्मद्भाष्ये अथात:शब्दयो: पर्यायान्तरै: विनिगमनाविरहमाशंक्य स्वरूपाधिक्यादिना तत्परिहार: कृत:। तदभिप्रायस्तु अनेकग्रन्थेषु तावेव द्वौ शब्दावादौ प्रयुक्तौ। न त्वेकस्मिन्नेव। तत्कुत इति प्रयोजनं वाच्यमिति।

ननु तद्विजिज्ञासस्वेति श्रुत्यनुगमाय सूत्रे जिज्ञासापदप्रयोग:। मैवम्। पूर्वमीमांसादावपि तत्प्रयोगनियमात् तद्विषयवाक्येषु तत्प्रयोगाभावात्।

यत्तूक्तम्—तपसा ब्रह्म विजिज्ञासस्वेत्युपदेशानन्तरं तदाचरणबोधके अन्नं ब्रह्मेति व्यजानादिति प्रतिपादनादिह ज्ञानेच्छापरोयमिति निश्चयादिति (त.मा.पृ. १६) तदतीव मन्दम् अस्याः श्रुतेस्तवातीव प्रतिकूलत्वात्। तथाहि तपसेति श्रुता तृतीया अभेदे हेतौ वा। आद्ये तपः कुर्वित्यर्थलाभेन नायं ज्ञानेच्छापर इति निश्चयः स्यात्। द्वितीये जिज्ञासाया स्तपोहेतुकत्वलाभेन तदानन्तर्यमेव सूत्रे वक्तव्यं स्यात् कर्मविचारे तपसो वार्ताया एवाभावेन कर्मविचारानन्तर्योक्त्या तपस आनन्तर्यस्यालाभात्। अस्मन्मते तु स्वधर्माचरणं तप इति भारतवचनात् स्वधर्माचरणरूपस्य तपसो ब्रह्म जिज्ञासाधिकारत्वेनाधिकारानन्तर्येणैव तत्संग्रहः सुशकः। यद्वा तपो ध्यानरूपमेवास्तु। तृतीया चाभेदे। निदिध्यासनादिसाधारणोपासनात्वावच्छिन्ने जिज्ञासापदरूढचङ्गीकारेण तत्र निदिध्यासनरूपतपःपदार्थान्वयः सुकर एव। सामान्ये विशेषाभेदान्वयस्य सर्वसंमतत्वात्।

यदप्युक्तमत एवेच्छाघटितसामग्रीप्राबल्यादन्यनिरूपणप्रतिबन्धादवसरसंगतिरपि संभवतीति (त.मा.पृ. १६) तदपि तुच्छम् विचारो न कर्तव्य इति पूर्वपक्षिमते विचारेच्छाया अलीकत्वेनान्यनिरूपणाप्रतिबन्धात्।

यदपि सामान्यतो ज्ञातत्वं विशेषतो वेदितव्यत्वं प्रेक्षावत्प्रवृत्तौ कारणम्। तदुभयमप्यत्रास्तीति ज्ञापनाय अनुपेक्षितव्यताहेतु संगताभिधान ज्ञापनाय परमपुरुषार्थ साधनतया सर्वापेक्षणीयत्वप्रतिपादनाय च तत्सार्थक्यमिति (त.मा.पृ. १६) तदपि न। सामान्यतो ज्ञातत्वादेर्विचारहेतुत्वे कर्मविचारस्य निरपेक्षसामग्रीत्वभङ्गात्। अतःशब्देनैव विशिष्टापात प्रत्यय विषयतया परमपुरुषार्थ साधनत्वोक्तेः तदर्थकसन्वैयर्थ्यस्य तदवस्थत्वाच्च।

एतेन प्रचुरप्रयोगादवयवार्थाप्रतीतावपि समुदायेनार्थप्रतिपत्तेः पार्थशब्दादौ दृष्टत्वात् जिज्ञासाशब्दात् इच्छाप्रतीत्यभावेपि विचार प्रतिपत्तिरिति (त. मा. पृ. १६) निरस्तम्। जिज्ञासाशब्दस्य रूढ्यङ्गीकारेणास्मन्मतप्रवेशापत्तेः। तथाहि अवयवार्थाप्रतीतावपि समुदायेन यार्थप्रतिपत्तिः सा न तावद्योगेन। अवयवार्थाप्रतीतिविरोधात्। नापि लक्षणया। प्रचुरप्रयोगात् शब्दवाच्यत्वाच्च। अतः परिशेषाद्रूढ्यैवेति।

एतेनैव मण्डपादिपदेषु तु योगस्यातिप्रसंगात् तत्त्यागः। न चेह तथा। अतएवापरिमित शब्द प्रतिबन्द्यपि निरस्ता। अपरिमितशब्दावयवार्थस्यापरिच्छिन्नत्वस्य सुपरिज्ञेय बहुत्ववति तत्प्रयोगाव्यापकतया बहुत्वाश्रय समुदायशक्तिकल्पना। इह तु तदभावादवयव शक्तिरेवेति (त.मा.पृ. १६) निरस्तम्। योगानतिप्रसंगेन रूढिं निराकुर्वता त्वयापि अपरिमितशब्दे योगार्थापरिच्छिन्नत्वानन्वय हेतुना रूढिसमा-

श्रयणात् मयापि जिज्ञासाशब्दे योगार्थस्य विचारानन्वय हेतुना रूढ्यंगीकारे बाधकाभावात् । न च तत्र लक्षणांगीकारेण विनिगमनाविरहः। मण्डपापरिमित शब्दयोरपि तदापातात् । मण्डपान कर्तृरूप मुख्यार्थसंबन्धवति गृहे मण्डपपदस्य अपरिमितशब्दयोगार्थत्र्त्यनेकत्वरूपगुणवति बहुत्वाश्रयेऽपरिमितशब्दस्य च लक्षणा संभवात् ।

यदपि सामान्यवाचिनः शब्दस्याभिमत विशेष पर्यवसानस्य लक्षणानपेक्षत्वात् ज्ञानमात्रवाचिनो ज्ञाधातोस्तर्करूपज्ञानविशेषे पर्यवसानं न वृत्त्यन्तरमपेक्षत इति (त.मा.पृ. १६) तदपि प्रतारणमात्रम्। योगेन पङ्क जनिकर्तृसामान्यवाचिनः पङ्कज पदस्य पद्मरूप विशेषे पर्यवसानं न रूढिमपेक्षत इति प्रसंगात्। पर्यवसितार्थधियो विलम्बित्वेन शीघ्रधीहेतुर्बलीयानिति श्रुतप्रकाशोक्त न्यायेन तत्त्यागापाताच्च । विचाररूपज्ञान विशेषे पर्यवसानस्य वृत्यन्तरानपेक्षत्वेनैव विचारस्य मुख्यार्थत्वे त्वद्रीत्यैव सिद्धे स्वातन्त्र्येण विचारविशेषणे तूत्सूत्रता स्पष्टेति त्वद्वचनस्य व्याहतत्वाच्च ।

यच्चोक्तम्--जानातेर्ज्ञानसामान्यवाचिनः स्वतो न प्रमितौ स्वारस्यं नापि सन्-समभिव्याहारादिच्छावाचिनस्तस्य प्रकृत्यर्थगतेष्टतामात्रगमकत्वात् स्वारसिकेष्ट-तायाः फल मात्र निष्ठत्वात् औपाधिकेष्टतायाश्च प्रमिताविव तर्करूपेपि संभवादिति (त.मा.पृ. १६) तदपि रिक्तम्। परमपुरुषार्थरूपस्य ब्रह्मणः कर्मणि षष्ठ्या कर्म-त्वावगमात् तस्यैव प्रमावैशिष्टयेन प्रसादवत्वेनैवोद्देश्यतया प्राधान्यावगमादिति त्वयैव पूर्वमुक्तत्वेन ब्रह्मप्रमितेः फलरूपत्वाङ्गीकारावगमात् तत्र स्वारसिकेष्टताया अपलापायोगात्। वस्तुतस्तु विचारानारम्भणीयत्व पूर्वपक्षकाले इच्छाविषयत्वेन विचारो न पक्षीकर्तुं शक्यते। पूर्वपक्षिणः इच्छाविषयत्वरूपपक्षविशेषणासिद्धेः। तथाच विचारे सनर्थ बाधात् सन् समभिव्याहृत ज्ञा धातोः प्रमित्यर्थकत्वमेव युक्तम्।

यदपि वेदान्तविजयोक्तरीत्या जिज्ञासा शब्दस्य विचार लक्षणाभ्युपगमेन त्वदुक्त दोषानवकाश इति (त.मा.पृ. १७) तत्तु त्वद्भाष्यविरुद्धम्। इच्छाया इष्यमाण प्रधानत्वादिष्यमाणं ज्ञानमिह विधीयत इति हि त्वद्भाष्यम्। तत्रेष्यमाणं ज्ञानमित्य नेनैव शक्यसंबन्धे लब्धे इच्छाया इष्यमाणप्रधानत्वादित्युक्ति वैयर्थ्यापत्त्या तद्विरोधः स्पष्ट एव ।

यदुक्तम्--रागप्राप्तस्यापि पूर्वपक्षयुक्तिमूलानारम्भणीयत्वशंकानिरासकत्वेन कर्त-व्यत्वप्रतिपादनस्य सार्थक्यमिति (त.मा.पृ. १७) तदप्यसंगतम् । पूर्वपक्षयुक्त्या विचारसफलत्व ज्ञानस्याप्रामाण्य ज्ञानास्कन्दितत्वेन विचारे रागोत्पत्तेरेवासंभवात् ।

यदपि आरम्भणीयत्वशंकाव्यावृत्तये चेदं सूत्रम्। तदनारम्भशंका च सिद्धे-व्युत्पत्त्यभावात् विचारित कर्मा हि कार्यान्वित शक्तिवाद कलुषितबुद्धिः सिद्धे पदानां व्युत्पत्तिं न सहत इति (त.मा.पृ. १७) तदतीवासंगतम्। ऐकशास्त्र्यवादिना सिद्धान्तिना हि आम्नायस्य क्रियार्थत्वादिति सूत्रमुत्सर्गतः पदानां कार्य परत्वं वक्ति स्वयं पुरुषार्थ पर्यवसायिनां सिद्धपरत्वं न निषेधति इत्युच्यते। अतः सिद्धव्युत्पत्ति सहिष्णु कर्मविचार एवानन्तर्यप्रतियोगितया सिद्धान्तिनोभिमतम्। तादृश कर्मविचारानन्तर्य विशिष्ट कर्तव्यत्वमेव साध्यम्। एवं च पूर्वपक्षिणापि तदेव प्रतिक्षेप्यम्। प्राभाकर सम्मत कार्यमात्रव्युत्पत्तिपरकर्मविचारानन्तर्यविशिष्टकर्तव्यत्वस्य पूर्वपक्षिणा निराकरणे वैयधिकरण्यात्। ततश्च सिद्धव्युत्पत्त्यभावस्य पूर्वपक्षहेतुत्वे व्याहतिः। सिद्ध-व्युत्पत्तिसहिष्णुकर्मविचारवतः सिद्धव्युत्पत्त्यभाव बुद्धेरेवानुदयात् तस्य कार्यान्वित शक्तिवाद कलुषितबुद्धित्वोक्तिस्तवैव दुर्वादकलुषित बुद्धितां प्रदर्शयति।

जिज्ञास्यब्रह्मणः प्रत्यगभिन्नत्वात्तस्य च स्वप्रकाशत्वान्न तत्प्रतिपत्तये शास्त्रमारम्भ-णीयमिति प्राप्ते योऽस्माकं जीव ब्रह्मभेदसाधनेन सिद्धान्तस्तमसहमानेनोक्तम् – नहि जीवब्रह्म भेदबोधकं किञ्चित्पदमत्रास्ति। ब्रह्मपदमेव गुणपूर्तिविधायकं तत्सूचकमिति चेत् सत्यम्। कथमतःशब्देनानुपात्तस्य तस्य हेतुत्वलाभः। कथं वा तदाच्छादनेन पूर्वपक्षः। तत्साधारण्य विवक्षया पूर्वपक्ष इति चेत् कथं बृहन् महदादि शब्दवदापेक्षिक बृहत्ववति सर्वत्राप्रयुज्यमानस्य साधारण्यशंका। ब्रह्म जाति जीव कमलासन शब्द-राशिष्वित्यनुशासनाज्जाति जीवादि साधारण्यं कल्प्यत इति चेत् कथं तर्हि प्रत्यगात्म मात्रपरत्वेनानारम्भशंका। कथं च विशिष्याज्ञातव्यक्तिमात्र विषयक जिज्ञासा विषय समर्पक ब्रह्मशब्दस्य प्रत्यक्षादिभिर्विशिष्यावगत जीवपरत्व शङ्केति (त.मा.पु. १८) तत्र ब्रूमः। अतःशब्देनानुपात्तस्यापि हेतुगर्भविशेषणेनोपात्तस्य हेतुत्वलाभो नालौकिकः। त्वन्मतेपि अतःशब्देनानुपात्तायाः जिज्ञासापदघटकसन्प्रत्ययोपात्ताया इच्छाया अनुपेक्षितव्यताहेतु संगताभिधानादि ज्ञापक हेतुत्वलाभ इत्यङ्गीकारात्। कथं वा तदाच्छादनेन पूर्वपक्ष इत्याक्षिपन् प्रष्टव्योसि – अम्बातातादि शब्देषु सिद्ध व्युत्पत्तेरनुभव सिद्धत्वेन तदाच्छादनासंभवेपि कथं त्वया तदाच्छादनेन पूर्वपक्षो वर्ण्यत इति। ब्रह्मशब्दस्य जातिजीवादिसाधारण्येपि प्रत्यगात्मपरत्व शंका तु उपनिषदामात्मविद्यात्वेन तद्गतब्रह्मशब्दस्य जात्यादिजडपरत्वशंकायोगाद्युक्तैव। विशिष्याज्ञातव्यक्ति मात्र विषयक जिज्ञासाविषयसमर्पकत्वं ब्रह्मशब्दस्य पूर्वपक्षिणोऽसिद्ध मेव। निर्विषयत्वेनाकर्तव्यैव जिज्ञासेति ब्रुवता तेन ब्रह्मशब्दस्य तद्विषयसमर्पक त्वानङ्गीकारात्।

यदपि ननु न ब्रूमोत्र ब्रह्मशब्दो जीवपर इति किन्तु जिज्ञास्यं ब्रह्म प्रत्यगभिन्न मितिचेत् कुतस्तदभेदो गृहीतः प्रत्यक्षं हि नाहमीश्वरइति तद्भेदं गृह्णाति। पुराणा दिश्रवणं चानवसरग्रस्तम्। वेदान्तवाक्यानि च न्यायनिर्णेयार्थानि। किंच श्रवणा नन्तरभावि मननात्मको हि विचारस्तव मते। तत्काले च न ब्रह्म प्रत्यगभेदज्ञानम्। गुरुमुखान्नयाययुक्तार्थग्रहणरूपेण श्रवणेन तद्भेदप्रमोत्पादकेन प्रतिबन्धादिति (त.मा.पृ. १८) तदपि एवं सिद्धान्ते कः पूर्वपक्ष इति वचनमनुकरोति। पूर्वपक्षस्य सिद्धान्तयुक्तिबाधितत्वेनानुत्थानमेवेति हि त्वयोच्यते। पुराणादिश्रवणमनवसर ग्रस्तमित्येतत् पूर्वमेव प्रत्युक्तम्। पुराणादि श्रवणावसरमलभमानस्य "स्मृतेश्चे" त्यादि बहुतरसूत्राणामपि श्रवणावसरो न स्यादिति। श्रवणकालेऽनुत्पन्नस्य ब्रह्म प्रत्यगभेदज्ञानस्य न मननकाले निराससंभव इति तु प्रतारण मात्रम्। त्वयापीक्षत्य धिकरणे समयपादे च सांख्यादिमतनिरासार्थं अध्ययनजन्यापातप्रतीतिकालेऽ नुत्पन्नानुमानिकप्रधानादिज्ञानस्यैव निरासात्। एतेन शास्त्रारम्भं विनाऽखण्डप्रत्य- गात्ममात्रप्रत्यायनस्यैवासंभव इत्यपि निरस्तम्।

यदप्यहमिति स्वप्रकाशतया भासमानत्वेपि अज्ञानावरणप्रयुक्त सविशेषत्व भ्रमनिवृत्तये निर्विशेषत्व निश्चयाय च तदारम्भसंभवादिति (त.मा.पृ. १८) तदप्य- युक्तम्। निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेदित्यनुव्याख्यानोक्त दिशाऽज्ञाना संभवादेव। निर्विशेषत्वस्यापि तन्मते मिथ्यात्वेन तन्निश्चयस्यानपेक्षितत्वाच्च।

एतेनाहंप्रत्ययेन स्थूलोहमित्यादौ देहाद्यवैलक्षण्यावगमे तन्निवृत्तये विचारा- रम्भसंभव इत्यपि (त.मा.पृ. १८) प्रत्युक्तम्। अज्ञानासंभवादेव देहाद्यवैलक्षण्य भ्रमायोगात्। तादृश भ्रमनिवृत्त्यनन्तरभावि वैलक्षण्य निश्चयस्यापि भ्रमत्वेन तदर्थ प्रयासवैयर्थ्यात्।

वैलक्षण्यस्यासत्यत्वान्न तदर्थं विचारारम्भ इत्याशंक्य यदुक्तम् असत्यत्वस्यैव विचारावसेयत्वात् अस्याप्यधिष्ठान याथात्म्य ज्ञानव्यावर्त्यतया तस्य च विचार साध्यतया तदारम्भसिद्धेश्चेति (त.मा.पृ. १८) तदप्येतेनैव निरस्तम्। असत्यत्व स्यापि मिथ्यात्वेन विचारानर्हत्वात्।

एतेनैव यदत्र स्वप्रकाशात्माभेदे सिद्धानुवादित्वान्न वेदान्तविचारः कर्तव्य इत्या शंक्य स्वरूपमात्रस्य स्वप्रकाशत्वेपि स्थूलोहमित्यादि लौकिक प्रत्यय प्रतिपन्न देहा द्यवैलक्षण्य व्यावर्तनाय तद्विलक्षणात्मप्रतिपादक वेदान्त विचारम्भ संभवात् स्वप्रकाशा- त्मनः स्वतः सिद्धत्वेपि प्रमाणान्तरासिद्धतया तद्विषयवेदान्तानामनुवादकत्वगन्धा भावात् अन्यथा सर्वमतेप्यगतेरित्युक्तम् (त.मा.पृ. १८) तदपि प्रत्युक्तम्। प्रमाण

सिद्धस्यापि तदितर प्रमाणासिद्धत्वावलम्बेनानुवाद कथोच्छेद प्रसंगाच्च। अस्मन्मते धर्ममात्रस्य स्वतः सिद्धत्वेपि धर्माणामागमैकसमधिगम्यत्वात् सर्व मतेप्यगत्या पादनस्यायुक्तत्वाच्च।

यदप्युक्तम् किंचैवं बृहन्तो ह्यस्मिन् गुणा इति श्रौत निर्वचनाच्छादनेन पूर्व पक्षः। तत्प्रकाशेन च सिद्धान्त इत्युक्तं स्यात् न चैतद्युक्तम्। कार्यान्वितशक्तिवादेन श्रुत्यनाच्छादनेनैव तत्संभवादिति (त.मा.पृ. १६) तत्रोच्यते। कार्यान्वित शक्ति वादेनापि अम्बातातादिशब्देष्वनुभवसिद्ध सिद्धव्युत्पत्त्याच्छादनेनैव खलु तव पूर्वः पक्षः। तर्हि किमपराद्धं श्रुत्याच्छादनेन। वस्तुतस्तु श्रौतनिर्वचनाच्छादनेन पूर्वपक्ष इति वदन् भ्रान्तोऽसि। गुणानां कल्पितत्वेन श्रौत निर्वचनस्य सिद्धान्ताननुकूलत्व मभिप्रेत्य पूर्वपक्षप्रवृत्तेः।

यदपि अथ योगाद्रूढि बलीयस्त्वेन पूर्वपक्ष उच्येत कुतस्तर्हि सिद्धान्तसिद्धिः। अज्ञरूढेर्विद्वद्योगबलीयस्त्वेनेति चेदुदहृत धात्वनुशासन मूलिकाया स्तस्याः कथमज्ञ संबन्धित्वमिति (त.मा.पृ. १६) तदपि दुराग्रहमात्रम्। त्वयापि अनुशासनमनादृत्य ब्रह्मशब्दस्यान्यत्रौपचारिकत्वोक्तेः। तथाहि त्वद्भाष्यम् तस्मादन्यत्र तद्गुणलेशायो गात् औपचारिकः अनेकार्थ कल्पनायोगादिति। एवं चाज्ञरूढित्वोक्तावपि अनुशासनस्य बाधकत्वं त्वया न वक्तव्यम्।

यदुक्तम् श्रौतस्यापि क्रमादेः स्वरूपतो दुर्बलस्य स्मार्तै रप्याचमनादिभिः स्वरूपतः प्रबलैर्बाधवदिहापि श्रौतस्यापि योगस्य स्वरूपतो दुर्बलस्य स्वरूपतः प्रबलया लौकि कयापि रूढ्या बाधस्यैव न्याय्यत्वात्। अत एवाकाशादि पदेषु ब्रह्मासाधारण लिङ्गा-न्तरैरेव रूढिबाधः कल्प्यते। न तु योगमात्रेणेत्यादि (त.मा.पृ. १६) तदप्यसंगतम्। श्रुतेः श्रुतिमूलत्वेनैव लब्धप्रामाण्यक स्मृत्या बाधायोगात्। सति विरोधे सावकाशत्व निरवकाशत्वाभ्यामेव प्राबल्यदौर्बल्य निर्णयात् वैदिक योगस्य लौकिक रूढ्या बाधे अस्यानुदाहरणत्वात्। लौकिकेन वैदिकबाधाङ्गीकारस्य त्वादृशवैदिकानामशोभा-वहत्वात्। वैदिकयोगेन लोकरूढिबाधमसहिष्णुना त्वयैव वैदिकलिङ्गेनाकाशादि शब्द लोकरूढि बाधाभ्युपगमस्यानुचितत्वाच्च।

यदप्याशङ्कितं कथं गुणपूर्णत्वप्रतिपत्त्या जीवपरत्व शंकापरिहारः ज्ञानेनापूर्णे पि पूर्णतापत्तेः पराभिमतत्वात्। गुणानां कल्पितत्वाङ्गीकाराच्चेति (त.मा.पृ. १६) तत्रोच्यते। पूर्णतापत्तिमात्रस्य पराभिमतत्वेपि हेतूक्तगुणपूर्णतापत्तिर्न तदभिमता। गुणानां कल्पितत्वात्। कल्पितत्वस्यैव श्रुत्यादिभिर्निरासे गुणपूर्णत्वप्रतिपत्तिः सुलभेति।

यदुक्तम्—

**प्रणवोच्चारणस्योक्ता वेदाद्यन्तस्थता श्रुतौ**
**उपक्रमोपसंहारमात्रे चैतद् व्यवस्थितम्**
**प्रतिवाक्यं प्रतिपदं न तद्‌दृष्टं न संमतम्**
**प्रतिसूत्रं तदिष्टं चेत् प्रमाणं तत्र दुर्लभम्**

इति (त.मा.पृ. २१) तन्न। प्रतिसूत्रं प्रत्येकं ब्रह्मविद्यात्वादिति प्रमाणस्याकरेषु लभ्यत्वात्। न च स्रवत्यनोंकृतं ब्रह्मेत्यादि प्रमाणस्य वेदविषयत्वमिति वाच्यम्। वेदस्येव ब्रह्मसूत्राणामपि ब्रह्मविद्यात्वसाम्यात्। ॐकारश्चाथशब्दश्च तस्मात् प्राथमिकौ क्रमादिति गारुडे सूत्राणामोंकारपूर्वकत्वोक्तेश्च।

**तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः**
**प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्।**

इति गीतोक्तेः ज्ञानयज्ञ ज्ञानदान रूप सूत्राणामप्योंकार पूर्वकत्व प्राप्तेश्च। तत्तन्मन्त्र स्वाहाकारपूर्वक होमेषु याज्ञिकानां पृथगोङ्कार पूर्वकमेव तत्तन्मन्त्रोच्चारणसंप्रदायात् तथैव ब्रह्मसूत्राद्यन्तयोरिव प्रतिसूत्रमाद्यन्तयो स्तदुच्चारणस्यावश्यकत्वाच्च। प्रति सूत्रब्रह्मविद्यात्वविवक्षया तदाद्यन्तयोरोङ्कारोच्चारणे बाधकाभावाच्च।

यदप्युक्तम्—

**गुणपूर्णत्वमस्यार्थो न तद् ब्रह्मान्वयं व्रजेत्**
**एकदेशान्वयित्वस्य पदार्थे क्वाप्यदर्शनात्**

इति (त.मा.पृ. २१) तदपि न, ब्रह्मजिज्ञासेत्यत्र भिन्नमेव ब्रह्मपदं लुप्तषष्ठीकमित्यङ्गीकारे एकदेशान्वयानवकाशात्।

यदपि समानार्थे ब्रह्मशब्दे पौनरुक्त्यमिति (त.मा.पृ. २१) तदपि न। ॐ इत्येतदक्षरमुद्‌गीथमुपासीतेत्यत्रोंकारः तद्विजिज्ञासस्व तद्‌ब्रह्मेतीत्यत्र ब्रह्मपदं चेति द्वयमपि जिज्ञास्ये जीवाद्भेदकत्वेनोच्यते। एतच्च तत्तद्विषयवाक्यगत भेदकमात्रोपलक्षणम्। उपलक्षणत्व द्योतनार्थं च पौनरुक्त्यमित्यङ्गीकारात्। वस्तुतस्तु गुणपूर्णत्वेनोमादि शब्दवाच्यत्वमेवार्थ इति न पौनरुक्त्यशंकापि। एतदङ्गीकृत्यैवान्यतरस्य रूढताप्याकरे वर्णितेति न तद्विरोधोपि।

यच्चोक्तम्—

**यूपःसप्तदशारत्निः शब्दप्राधान्यतः कुतः**
**अतादृशं यतो ब्रह्म कुतस्तत्रौततान्वयः,**

इति (त.मा.पृ. २१) तत्रोच्यते। चन्द्रिकायामेव सुस्पष्टमुक्तं यूपस्य प्राधान्यवत् अत्राप्योततान्वयि जिज्ञासायाः प्राधान्यमस्त्येवेति। त्वं तु किमित्यक्षिणी नीमील्य बिडालवदाचरसि।

यदपि चोक्तं जगदुस्तन्त्रनिष्णाताः प्राशस्त्यं भावनान्वितमिति (त.मा.पृ. २२) तदनङ्गीकारपराहतम्। भावनाया अप्रामाणिकत्वेन प्राशस्त्यस्यास्माभिः साक्षात्कर्मा न्वयित्व स्वीकारात्।

यच्चोक्तम्—

**अथातः शब्दपूर्वाणि सूत्राणि निखिलान्यपि ।**
**अथातःशब्दयोरेवं वीर्यमाज्ञाय तत्वतः ।।**
**उपक्रमोपसंहारावित्थं दृष्ट्वापि गारुडम् ।**
**प्रणवावयवत्वोक्तौ प्रमाणं कथमिष्यते ।।**

(इति त.मा.पृ. २२) तदप्यविचारित रमणीयम्। ब्रह्मविद्यात्वेनोङ्कारपूर्वकत्वं पूर्वमेव हि विजानता नारदेनाथातःशब्दविषय एव प्रश्नकरणात् तद्विषय एव परिहारो युक्तः। नैतावतोङ्कारपूर्वकत्वे कोपि विरोधः। प्रत्युत तदपि न विस्मर्तव्य-मित्याशयेन ॐकारश्चाथशब्दश्च तस्मात् प्राथमिकौ क्रमादिति मध्ये उक्तम्। अन्य-थाऽपृष्टोत्तरत्वेनासंगतत्वापातात्। अतएव तावेवादौ प्रयुञ्जत इत्यत्रैवकारोपि नोङ्कारव्यवच्छेदक इति द्रष्टव्यम्।

यदपि कर्तव्यपदाभाव इव प्रणवाभावे सूत्रस्य साकांक्षत्वाभावान्नाध्याहारो युक्त इति तदप्यसंगतम्। अनुग्राह्य प्रमाणाभावात् अनुग्राहक जिज्ञासा न कार्येति शंकायां सर्वे वेदा अनुग्राह्यं प्रमाणमिति वक्तुं सर्ववेदव्याख्येय तन्मूलभूतोङ्कारोच्चार णस्यावश्यकत्वात् अनुच्चारितत्वेनाध्याहारापेक्षणादिति।

---

# अथ जन्माद्यधिकरणम्

## ॐ जन्माद्यस्य यतः ॐ

पूर्वोक्त विशिष्टाधिकारिक मोक्षफलक जीवान्यधर्मिक गुणपूर्णत्वप्रकारक जिज्ञासाक्षेपेण पूर्वपक्षोत्थानादाक्षेपिकी संगतिः। प्रागुक्त जिज्ञास्य ब्रह्मणो लक्षणमुच्यत इति वा पूर्वाधिकरणेन संगतिः।

तैत्तिरीये श्रुतं – 'यतोवा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व तद्ब्रह्मेति' इति। यत् प्रयन्ति प्रलय इत्यर्थः। यद् अभि स्वेच्छया संविशन्ति मुक्तावित्यर्थः।

तत्र तद्ब्रह्मेत्युक्तं ब्रह्म किं जीवो विष्णुर्वेति संदेहः।

पूर्वपक्षस्तु बृह जातिजीवकमलासनशब्दराशिष्वित्युक्तेर्ब्रह्मशब्दस्य जीवेयौगिकार्थस्यायोगेन रूढत्वात् विष्णौ तु रूढेरभावात् गुणपूर्त्यभावापातेन यौगिकत्वायोगाच्च योगाद्रूढे र्बलीयस्त्वात् यतो वा इति पूर्ववाक्योक्तकारणत्वस्यादृष्टद्वारा जीवेपि संभवात् अतएव जात्यादेरत्रासंभवादात्मा वा अरे द्रष्टव्य इत्यादि मननविधायक वाक्यान्तरे जीवे प्रसिद्धात्मपदप्रयोगाच्च जीव एवेदं ब्रह्म। तस्य चाहंधीसिद्धत्वान्न जिज्ञासा कार्येति।

सिद्धान्तस्तु यतो वा इत्यादिपूर्ववाक्योक्त जगज्जन्मादिकारणत्वस्य य उ त्रिधातु पृथिवीमुत द्यामित्यादिना विष्णवेकनिष्ठत्वात् अदृष्टद्वारा जीवकारणातापरत्वे जातादिपदास्वारस्यात् इमानीति सर्वनाम्नः संकोचकाभावात् अभिसंविशन्तीत्युक्त मुक्तप्राप्यत्वस्य सर्वथायोगात्। इतरव्यपदेशादिति द्वितीये जीवकर्तृताया निरसिष्यमाणत्वाच्च जन्मादिकारणत्वबाधकेन रूढेस्त्याज्यत्वात् आत्मा वा अरे इत्यत्र जिज्ञास्ये श्रुतात्मशब्दस्य स्वशब्दादिति वक्ष्यमाणन्यायेन विष्णुवाचित्वात्तदेव ब्रह्म परमं कवीनामिति विद्वद्रूढि सत्वात् तस्याश्चाज्ञरूढितो बलवत्वात् योगरूढिभ्यां गुणपूर्णो विष्णुरेव ब्रह्मेति तस्य संदिग्धत्वात् कर्तव्यैव तज्जिज्ञासेति।

वर्णकान्तरं तु ब्रह्मशब्दः प्रसिद्ध जीवपर उतार्थान्तरपर इति सन्देहे अन्त्ये तस्यार्थस्य तद्वाचितायास्तत्र तात्पर्यस्य च कल्प्यत्वाग्दौरवम्। आद्ये तु लाघवम्। जीवस्याकल्प्यत्वात्। बृहजातिजीवेत्यभिधानात् शक्तेरपि क्लृप्तत्वात्। अबाधेन तात्पर्यस्यापि सिद्धत्वात्। अतो जीवपर एवेति प्राप्ते यन्न दुःखेन संभिन्नं न च ग्रस्त-

मनन्तरम्। अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम् इति श्रुतेः स्वर्गपदस्य चन्दनादि-रूप प्रसिद्धार्थत्यागेनाप्रसिद्धार्थपरत्ववत् ब्रह्मशब्दस्यापि यतो वेत्यादिवाक्यशेषात् प्रसिद्धार्थत्यागेनालौकिकार्थत्वोपपत्तिरिति सिद्धान्त इति वा; अलौकिक विशेष्य परत्वे गौरवात् प्रसिद्धविशेष्यपरत्वे लाघवात् तदनुसारेण जीवे संभवद्गुणपूर्तिरेव प्रवृत्तिनिमित्तं न तु सिद्धान्त्यभिमत गुणपूर्तौ तात्पर्यमिति जीवपर एवेति प्राप्ते कारणत्वेनैव बाधकेनालौकिक विशेष्य परत्वम्। ततश्च संकोचकाभावात् सर्वगुण पूर्तिरेव प्रवृत्ति निमित्तमित्यर्थान्तरपर एवेति सिद्धान्त इति वा; पूर्वसूत्रे जिज्ञासोत्थ ज्ञानजन्य प्रसादद्वारा मोचकत्वात् विष्णोः जिज्ञासा कार्येत्यभिहितमयुक्तम्। तथात्वे बन्धकत्वात् तज्जिज्ञासा न कार्येत्यपि स्यात्। न चायमबन्धकः। जीवस्याबद्धत्वस्व बद्धत्वयोरयोगेनान्यबद्धत्वे वाच्येऽन्यस्य चेतनस्याचेतनस्य वा ईशाधीनत्वेन पुनरी श्वरस्य बन्धकत्वेनाजिज्ञास्यता। अन्याधीनत्वे स्वानधीन कृतात् बन्धात् मोचकत्वं नेशस्येति न तज्जिज्ञासा कार्येति प्राप्ते अप्रसन्नस्य बन्धकत्वं प्रसन्नस्य तु मोचकत्व मिति तत्प्रसाद हेतु ज्ञान जननाय तज्जिज्ञासा कार्येति सिद्धान्त इति वा।

अत्रान्त्ये मुक्तिरस्य यत इति सूत्रे विन्यसितव्ये जन्मादीति सृष्टि हेतुत्वोक्ति र्मोचकत्व संभावनार्था।

अत्र जिज्ञासाकर्तव्यत्वं फलम्।

जिज्ञास्येतरव्यावृत्त्यर्थं लक्षणपरेऽस्मिन् सूत्रे अस्मदुक्तरीत्याऽव्यावृत्तिपूर्व पक्षस्यैव संभवे यदन्यथा केषांचित्पूर्वपक्षवर्णनं तदयुक्तम्। यदपि (त.मा.पृ. २५) अव्यावृत्तेर तिव्याप्तिरूपाया लक्ष्ये लक्षणसंभवोपजीवितयान्तरङ्गत्वेनासम्भवशङ्काया एव प्रथमं वारणीयतेति तदसम्बद्धम्। अतिव्याप्तिशरीरे लक्ष्ये लक्षणसंभवस्य वैयर्थ्येना प्रवेशात्। व्यभिचाररूपेणैवातिव्याप्तेर्दोषत्वेन अयं हेतुरसाधकः व्यभिचारादिति प्रयोगे व्यर्थ विशेषणत्वभिया विपक्षवृत्तित्वातिरिक्तस्य व्यभिचारशरीराप्रवेशे अलक्ष्यवृत्तित्वातिरिक्तस्यातिव्याप्तिशरीरेपि प्रवेशस्यानुचितत्वात्। किंचलक्षण परेण अनेन सूत्रेण लक्षणोक्तावेव तदसम्भवशङ्कावसरात् तत्पूर्वमेव तादृशशङ्काया अनुत्पन्नाया वारणीयत्वं वदत स्तवाहो कौशलम्।

जन्मादिशब्देन कार्यावस्थारूपोत्पत्त्यादि विवक्षायां तद्भेदेन तदनाश्रयब्रह्मभेद शंका न युक्तेति चन्द्रिकोक्तदूषणमाशंक्य यदुक्तम् (त.मा.पृ. २६) उपादानस्य ब्रह्मण उत्पत्त्यन्वयाविरोधादिति तदजोपि सन्नव्ययात्मेत्यादि श्रुतिविरूद्धमयुक्तं च। कार्यावस्थाया ब्रह्मलक्षणत्वे कार्येतिव्याप्तेः। प्रकृतिद्वारा ब्रह्मण उपादानत्व मिति त्वयाङ्गीकारात् प्रकृतावतिव्याप्तेश्च। उक्तं हि त्वया यतो घटजन्म तन्मृद्द्र

व्यमित्युक्तेपि मृदो घटत्वावस्थारूप जन्मान्वयाव्याघातादिति। यदि चाभिन्न-निमित्तोपादानत्वस्य लक्षणत्वेन विवक्षणान्न कार्ये न वा प्रकृतावतिव्याप्तिरित्यभिमानः तर्हि तादृशोपादानस्थलमेवोदाहरणीयम्। यतो घटजन्मेति केवलोपादानस्थलोदाहरणस्य यतश्चैत्रजन्मेत्यादि केवलनिमित्तस्थलोदाहरणेन सत्प्रतिपक्षितत्वेनाकिञ्चित्करत्वात्।

यदपि ब्रह्मणः सर्वशक्तित्वात् सर्वात्मना परिणाम शक्तिसद्भावात् कार्यावस्थारूपजन्माद्यन्वयः। चैत्रादौ तु न तथेति (त.मा.पृ. २६) तदपि बालिशम्। त्वन्मते एकप्रकृतिकार्यस्य विश्वस्यैव परस्परभेदरहितत्वेन यत्किंचिद्वस्त्वात्मना परिणामशक्तिमतश्चैत्रादेः सर्वात्मना परिणाम शक्ति निराकरणे हेत्वभावात्। अवस्थाभेदोपाधिकभेदस्यावास्तवत्वेनाकिंचित्करत्वात्।

यच्चावस्थान्तरयोगित्वमेवोपादानत्वम्। अवस्थाश्च जन्मादय एवेति त एव लक्षणत्वेन पर्यवस्यन्तीति (त.मा.पृ. २६) तन्न। त्वया अभावस्याप्यवस्थात्वाङ्गीकारेणाभाववत उपादानत्वव्यवहार प्रसंगात्। भावरूपत्वेनावस्थाविशेषणे तव भावाभावयो र्भेदाभावेन वैयर्थ्यात्। स्वाभावातिरिक्तत्वेनावस्थाविशेषणे दधित्वावस्थायाः क्षीराभावरूपत्वेन क्षीरस्य दध्युपादानत्वाभावापातात्। क्षीरं दधि भवतीति व्यवहाराभावप्रसङ्गात्। यदपि विशेषणत्वावच्छेदेन स्वाश्रयभेदकत्वमिति मतावष्टम्भेन भेदकत्वशंकोपपादनं यच्च विरुद्धविशेषणत्वावच्छेदेनैव तथात्वमिति मतेपि जन्मकारणत्व स्थितिकारणत्वयोर्लयकारणत्वेन विरोधित्व भ्रमेण भेदकत्व शंकासमर्थनं (त.मा.पृ. २६) तदुभयमप्यगतिका गतिः। अस्माभिः मतविशेषमात्रानवलम्बनेन भ्रमामूलकस्यैव पूर्वपक्षस्योपपादितत्वात्।

यदपि पुत्रादि स्रष्टरि पित्रादौ तत्संहर्तृत्वादर्शनात् नैकस्मिन् त्रयाणां दर्शनमिति (त.मा.पृ. २६) तत् त्वदभिमताभिन्ननिमित्तोपादानविषये पित्रादेरनुदाहरणत्वेनायुक्तम्। यदप्युक्तं साधारणकारणे एकस्मिन्नुत्पत्तिस्थितिलयानां त्रयाणां संभवेपि असाधारणकारणे तदसंभवादिति यच्च मृदादौ घटाद्यसाधारणकारणे तद्दर्शनेपि मृदादेर्जनकत्वाभावादिति तदुभयमपि (त.मा.पृ. २६) मन्दम्। ब्रह्मणः कार्यत्वावच्छिन्नं प्रति कारणत्वेन साधारणकारणत्वप्रयुक्तोत्पत्यादित्रितयाश्रयत्वसंभवात्। असाधारणकारणत्व सत्वमात्रेण तदपलापायोगात्। तदधीनत्वादर्थवदित्यत्र परमपुरुष शरीरत्वरूप तदात्मकत्वेनैव कारणत्वमव्यक्तस्योपादानस्येति त्वयोक्तत्वेन मृदादौ घटादि जनकत्व निराकरणे तद्विरोधाच्च।

शक्तीनामतीन्द्रियाणां कार्यैकोन्नेयत्वात् कार्याणां च विरोधिनामेककालेऽसंभवेन कालभेदेनैव तद्वाच्यमित्यपि (त.मा.पृ. २६) अनुपपन्नम्। अनन्तशक्तितत्प्राग-भाव ध्वंसकल्पनायां गौरवभयेन एकयैव शक्त्या क्रमेण काष्ठादिदाहकत्वमग्नेर्यथा शक्तिवादिभिरभ्युपेयते तथा प्रकृतेपि क्रमिक कार्यविषये सार्वदिक शक्त्यंगीकारस्य युक्तत्वात्। योग्यतारूपायास्तस्याः सार्वदिकत्वेपि फलोपहितायास्तस्या असार्वदिक त्वादित्यपि (त.मा.पृ. २६) असंगतम्। यतोवेति श्रुतौ फलोपधाने ज्ञापकाभावा द्योग्यताभिधानस्य स्वरसत्वात्।

यदपि सर्गाद्या भावशक्तय इति न सर्गादीनां वास्तव भावशक्ति तादात्म्याभि प्रायकं किन्त्वायुर्घृतमितिवन्निर्वाह्य निर्वाहक भाव प्रयुक्ताभेदारोप मात्राभिप्रायक मिति (त.मा.पृ. २६) तच्छब्दार्थानवबोध विजृम्भितम्। सर्गादिपदानां कर्तृव्या-पार वाचकत्वेन कर्तृनिष्ठ सर्गादीनां वास्तवभावशक्ति तादात्म्ये बाधकाभावात्। एतेन सर्गाद्या भावशक्तय इति सामानाधिकरण्य निर्वाहाय सर्गादिविषया ब्रह्मणो भावशक्तय इति व्याख्यानमपि निरस्तम्। उक्तरीत्या ब्रह्मधर्माणां सामानाधिकरण्ये बाधकाभावात्।

अवश्यं चैतदेवं विज्ञेयम्। निर्गुणस्य ब्रह्मणः कथं सर्गादिकर्तृत्वमिति प्रश्ने हि यथाग्नेरुष्णता एवं ब्रह्मणः सर्गाद्या भावशक्तय इति समाधानमुच्यते। सर्वाः प्रवृत्तयो लोके सत्वादिगुणकार्यतया दृष्टाः। निर्गुणे ब्रह्मणि कथं तदुपपत्तिरिति प्रश्ना-शयः। समाधानं तु अस्वाभाविकप्रवृत्तेरेव गुणकार्यत्वम्। ब्रह्मणस्तु प्रवृत्तिः स्वाभाविकी न गुणानपेक्षत इति। एवं च सर्गादीनां वास्तव भावशक्तितादात्म्याभिप्रायैवेयं स्मृतिः। प्रश्नवाक्येपि सर्गादिकर्तृत्वमिति सर्गादिरूपं कर्तृत्वमुच्यते। न तु सर्गादि विषयकं बाधितत्वात्।

यच्चोक्तम्—न पूर्वपक्षस्याव्यावृत्तिपर्यन्तत्वं युक्तम्। ब्रह्मशब्दव्यवहारोपयोगि निरतिशय बृहत्त्वसिध्यनुगुण लक्षण परत्वेनाव्यावृत्तिपर्यन्तत्वासिद्धेः। नहि लक्षण त्वावच्छेदेन व्यावृत्तिप्रयोजनकत्वनियमः इति (त.मा.पृ. २७) तदपि न। भावा-नवबोधात्। न हि लक्षणत्वावच्छेदेन व्यावृत्तिप्रयोजनकत्वनियमः अस्माभिरादृतः। किन्तु व्यतिरेकिलक्षणत्वावच्छेदेन। किंच जिज्ञास्यस्येतरव्यावृत्तत्वाज्ञाने विवक्षिता सिध्या व्यावर्तकलक्षणस्यैव वक्तव्यत्वेन पूर्वपक्षस्याप्यव्यावृत्तिपर्यन्तत्वावश्यकत्वेन व्यवहारोपयोगिनिरतिशयबृहत्वसिद्ध्यर्थत्वरूप त्वदुक्तहेतोरेवासिद्धिरिति द्रष्टव्यम्।

जन्मादीनां विशेषणत्वेनोपलक्षणत्वेन वा जीववैलक्षण्यागमकत्वमित्यपि (त.मा.पृ. २७) अनुक्तोपालम्भमात्रम्। जन्मादिकारणत्वस्यास्माभिः ब्रह्मलक्षणत्वा

ङ्गीकारात्। वेदान्तानां कर्मकर्तृजीवस्तावकतया पृथग्वेदान्तविचारो नारम्भणीय इत्यव्यावृत्ति पूर्वपक्षस्यापि सुलभत्वाच्चेत्यप्यनवसरग्रस्तम्। अस्माभिः पूर्वपक्ष-दौर्लभ्यानुक्तेः।

यदपि तदेव ब्रह्म परमं कवीनामिति सावधारण निर्देशावगत जीवविलक्षण ब्रह्मप्रतिपत्त्यनुरोधेन नारायणोऽसौ परमो विचिन्त्य इति त्वदुदाहृत विचार विधिगत नारायणशब्द विरोधेन च जिज्ञास्यसमर्पक ब्रह्मशब्दस्य रूढ्यापि जीव-परत्वासंभवेन पूर्वपक्षानुत्थितिरिरिति (त.मा.पृ. २७) तद्दुराग्रहमात्रम्। परीक्ष्य लोकानिति श्रुतौ कर्मविचारानन्तरं ब्रह्मविचारकर्तव्यतोक्तेः सिद्धे व्युत्पत्यभावे तदयोगात् पूर्वमेव सिद्धव्युत्पत्ति सिध्या तवापि पूर्वपक्षानुत्थिति साम्यात्। किंच तद्विजिज्ञासस्वेति विषयवाक्यसमीप एव यतोवेत्यादिना जीवव्यावर्तक लक्षणकथना-त्पूर्वपक्षानुत्थितेः सुवचत्वेपि स्थलान्तरस्थं तदेवेत्यादि वाक्यमवलम्ब्य पूर्वगक्षानुत्थितिं वदतस्तवाहो कौशलम्। विषयवाक्योक्त लक्षणान्याच्छाद्य पूर्वपक्षसंभवश्चेत्तर्हि स्थलान्तरे दूरे वर्तमानं तदेवेति वाक्योक्तमाच्छाद्य पूर्वपक्षः सुतरां संभवतीति किं न पश्यति भवान्।

यदुक्तम् एकस्मात्पुरुषात्कालभेदेन सस्याद्युत्पादनावनलवनवत् जननरक्षण क्षपणानामपि संभवेन तन्निरूपितकारणतानामेकस्मिन्नविरोधः सार्वकालिक एवा-स्माभिरभिहित इति (त.मा.पृ. २७) तत्तु कार्याणामेककालत्वासंभवाच्छक्तीनामपि कालभेद इति त्वदुक्ति विरुद्धम्। तस्य तवाननुमतत्वे तन्निरासे प्रवृत्ता वयं त्वयैवोप कृताः स्मः। किंच सस्योत्पादनादौ सर्वानुभव सिद्धमैकाधिकरण्यमाच्छाद्य तव पूर्व पक्षकरणमत्यन्तं लघु।

श्रुतौ यत्प्रयन्त्यभिसंविशन्तीति तिङन्तपदद्वयेन प्रलयमोक्षावुक्तौ। अन्यथा-न्यतर वैयर्थ्यात्। अतो विषय वाक्यानुसारेपि चतुर्णां वक्तव्यत्वे त्रितयोक्तिरयुक्तेति चन्द्रिका। अत्र यदुक्तम् तिङन्त भेदे सति पूर्ववद्यत्पदभेदे प्रयोक्तव्ये तदप्रयोगात् प्रयन्तीत्येतज्जातानीतिवद्भूतविशेषणम्। प्रयन्ति प्रलीयमानानि सन्ति भूतानि यदभि संविशन्ति यत्प्रविशन्ति यदवस्थां प्राप्नुवन्तीति उभाभ्यां कारणावस्थापत्तिरूपो लयः प्रतिपाद्यते न मोक्षः। तथा सति भूतपद प्रतिपाद्यैकदेशे चेतने तदन्वयावश्यकत्वे एकदेशान्वयापत्तेरिति (त.मा.पृ. २७) तत्केवलमुन्मत्त भाषितम्। तिङन्त भेदस्य यत्पदभेदाप्रयोजकत्वात् सकृत्प्रयुक्तयत्पदस्यानुवृत्त्या वाक्य परिसमाप्तेः। कारक भेदे सत्येव तद्बोधनायासकृद्यत्पदप्रयोगावसरात्। प्रकृते यतः जायन्त इत्यत्र जनिकर्तुः प्रकृतिरिति सूत्रोक्तमपादानत्वं विभक्त्यर्थः। येन जीवन्तीत्यत्र कर्तृत्वम्। यत् प्रय-न्तीत्यत्र कर्मत्वमिति कारकभेदात् यत्पदभेदः।

ननु कथं भवन्मते अनुपादानस्य ब्रह्मणोऽपादानत्वम् ? मैवम्। उपादान ससृष्ट तया जनकस्यैवापादानसंज्ञा जनिकर्तुरिति सूत्रविहिता। नोपादानस्य। अन्यथा कार्ये प्रकृतिद्रव्यावयवानुस्यूतिसत्वेनोपादानस्य विश्लेषावधित्वासंभवात् ध्रुवमपायेऽपादानमिति सूत्रविषयत्वकथनं, अयमपि योगः शक्योऽवक्तुमिति एतत्सूत्रप्रत्याख्यानं च भाष्यकारीयमसंगतं स्यात्। उपादानसंसृष्टतया जनकस्य तु कार्यं विश्लेषावधित्वसंभवादपादानसंज्ञा ध्रुवमपाय इति सूत्रेणैव प्राप्तेति हि भाष्यकाराशयः। एवं च ब्रह्मण उपादानत्वमिति त्वत्पक्ष एव तस्यापादानसंज्ञा चिन्त्या स्यात्।

तथाचापादानत्व कर्तृत्वरूप विभिन्न कारक बोधनार्थं यतो येन यदिति पृथक् प्रयोगो यत्पदस्येति युक्तम्। यत् प्रयन्तीत्यत्र प्रयुक्तयत्पदस्यैवाभिसंविशन्ति इत्यत्रान वृत्तिः। तत्रापि कर्मत्वस्यैव विवक्षितत्वेन कारकभेदाभावात्। अतस्तिङन्तभेदे न किञ्चिद्बाधकम्। एवं सत्यपि प्रयन्तीत्येतस्य जातानीतिवद्भूतविशेषणत्वाङ्गीकारो निर्मूल एव। व्यर्थश्च। जातानीति तु जीवनस्य जन्मसापेक्षत्वबोधनार्थं हेतुगर्भ विशेषणमिति तत्सार्थकम्।

प्रयन्तीत्यस्य प्रलीयमानानीति अभिसंविशन्तीत्यस्य च यत्प्रविशन्ति यदवस्थां प्राप्नुवन्ति इति व्याख्यानं लाक्षणिकत्वापत्तेरनादरणीयम्। नहि गृहं प्रविशन्तीत्युक्ते गृहावस्थाप्राप्तिः प्रतीयते। ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परन्तपेत्यत्रापि प्रवेशस्य सायुज्यरूपत्वं ह्युच्यते। अचेतन भूतानां कथं सायुज्यमिति चेत्तर्हि कथं जीवनमपि। तत्र भूतपदं चेतनमात्रपरं चेदिहापि तथा। वस्तुतस्तु ईश्वरःसर्वभूतानां हृद्देश इत्यादि प्रयोगाच्चेतने भूतपदं मुख्यम्। भूतानि जायन्त इत्यत्रैव अचेतनस्याप्युपलक्षणत्वेनामुख्यम्। अभिसंविशन्तीत्यत्र तदभावेन मुख्यमेवेति युक्तम्। एतेनाभिसंविशन्तीत्यस्य मोक्षपरत्वे भूतशब्दार्थैकदेशे चेतनेऽन्वयादेकदेशान्वयापत्तिरित्यपि प्रत्युक्तम्। त्वयैव सामान्यशब्दस्य विशेषपर्यवसाने वृत्त्यन्तरापेक्षा नेति पूर्वमुक्तत्वाच्च। विशेषपर्यवसानस्थले एकदेशान्वयोद्भावनस्यालौकिकत्वाच्च। नहि नीलो घट इत्यत्र शुक्लादिसाधारण घटशब्दस्य योग्यतया नीलघटव्यक्तिपरत्वे एकदेशान्वय उद्भाव्यते। एतावता प्रयन्ति अभिसंविशन्तीति पदद्वयान्यतर वैयर्थ्यमपि चन्द्रिकोक्तम् न परिहृतम्। प्रयन्तीत्यनेनोक्तस्य प्रलयस्य कारणावस्थापत्तिरूपता अभिसंविशन्तीत्यनेनोच्यत इति चेत् अभिसंविशन्ति इत्यनेनोक्तस्यप्रलयस्य प्रयन्तीत्यनेन कारणावस्थापत्तिरूपतोच्यत इति किं न स्यात् लाक्षणिकत्वस्योभयत्रापि साम्यात्। न ह्यभिसंविशन्तीति पदं शक्त्या कारणावस्थापत्तिमाह।

यदपि मोक्षश्च तद्विजिज्ञासस्वेत्युक्तिसामर्थ्यादेवावगम्यते। न ह्यपुरुषार्थे तथोक्तिरुपपद्यते। स च पुरुषार्थो महानन्द इति तैत्तिरीय वाक्यान्तरैरेवावगम्यते

इति (त.मा.पृ. २७) तत्र ब्रूमः। जन्मादिलक्षणमपि तद्विजिज्ञासस्वेत्युक्ति सामर्थ्या देवावगम्यते। न ह्यव्यावृत्ते तथोक्तिरुपपद्यते। तच्च व्यावर्तक लक्षणं जन्मादीति "अद्यतेत्ति च भूतानी"त्यादि तैत्तिरीयवाक्यान्तरैरेवावगम्यत इति।

यदप्यात्यन्तिक लयरूपत्वान्मोक्षस्य लयान्तर्भाव इति (त.मा.पृ. २८) तत्तु शून्यतत्व जिज्ञासायामुपयुज्येत। न ब्रह्मजिज्ञासायाम्। न ह्यपुरुषार्थमात्यन्तिकलय मुद्दिश्य जिज्ञासायां कोऽपि प्रवर्तयितुं शक्यते। किंच त्रयाणां निर्देशं प्रतिज्ञाय किमेवं चतुर्णां निर्देशं वदसि। वाच्यवृत्त्या त्रयाणां निर्देशः प्रतिज्ञात इति चेत्कया चतुर्णां निर्देशः। सामान्य शब्दस्य विशेषे पर्यवसाने न वृत्त्यन्तरापेक्षेति हि त्वयोक्तम्। रक्षा भरण नियमन ज्ञानानां स्थितावन्तर्भावश्च चन्द्रिकायामेव निपुणतरं दूषितः।

यच्चोक्तमज्ञानमिति न किंचिद्भावरूपमङ्गीकुर्मः। अतो ज्ञानविरोधिकर्मैवा ज्ञानम्। तच्चानादि। न च तत्प्रति स्रष्टृत्वरूपं कर्तृत्वम् इति (त.मा.पृ. २८) तद युक्तम्। मायां तु प्रकृतिं विद्यादित्यादिषु प्रकृतिपदोपात्तस्य भावरूपाज्ञानस्य प्रामा णिकत्वात्। न चैतदपि कर्मैवेति वाच्यम्। प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वश इत्यत्रागतेः। अनादित्वेप्यज्ञानस्य चेतनस्येव पराधीन विशेषावाप्तिरूपजनिमत्त्वात् तत्प्रति स्रष्टृत्वं भगवतोऽस्त्येव।

एतेन बन्धस्तु कर्मप्रयुक्त देहादि संबन्धः तस्य सृष्टावन्तर्भाव इत्यपि निरस्तम्। भिद्यते हृदयग्रन्थिरित्यत्रोक्तस्य लिङ्गदेहसंबन्धस्यैव बन्धरूपत्वात्। अन्यथा प्रति मरणं देहसंबन्ध निवृत्त्या मोक्षप्रसंगात्। बन्धानादित्ववचनमपि शास्त्रेष्वनुपपन्नं स्यात्। एवं च बन्धस्य न सृष्टावन्तर्भावः। कर्मनिमित्तक देहसंबन्धः सृष्टिः अनादि लिङ्ग देहसंबन्धो बन्ध इति तयोर्भेदात्। किंच बन्धनिवृत्तिरूपमोक्षस्य लयान्तर्भावे प्रागभाव निवृत्तिरूपसृष्टेरपि लयान्तर्भावः स्यात्। यदपि चन्द्रिकोक्तमिदं दूषण माशङ्क्योक्तम्—सृष्टेरुत्तरावस्थारूपायाः प्रागभाव निवृत्तिरूपत्वाश्रयेण दूषणापादनस्य व्यधिकरणत्वादिति (त.मा.पृ. १८) तत्तुच्छम्। सृष्टेरुत्तरावस्थारूपत्वे अवस्था-सृष्टेरप्यवस्थागतावस्थारूपत्वेनानवस्था स्यादिति तत्वमुक्ताकलापोक्तदिशावस्थासृष्टेः प्रागभावनिवृत्तिरूपत्वात् अन्यत्रापि सृष्टेः प्रागभावनिवृत्तिरूपत्वे लाघवाच्च।

एतेन सृष्टिलययोरचिन्मात्रसाधारण्यस्य वक्तुमशक्यत्वादित्यपि (त.मा.पृ. २८) निरस्तम् प्रागुत्तरावस्थारूपलयसृष्ट्योः अवस्थास्वसंभवात् त्वदुक्त कृत्स्न प्रपञ्चसाधारण्यस्याप्ययोगात्। वस्तुतस्तु प्रागवस्थाया लयरूपत्वं वा अचिदसाधारण्यं वा नास्माभिरुक्तम्। किन्तु पराधीन विशेषावाप्तिरूपसृष्टेः तत्प्रहाणरूप लयस्य च सर्वपदार्थसाधारण्यमेवोक्तम्। अतस्त्वदुक्तमनुक्तोपालम्भमात्रम्।

स्वरूपानन्दाविर्भावरूप मोक्षस्य प्रागवस्थारूपतया लयान्तर्भाव इत्यपि (त.मा.पृ. २८) न। संसारस्यैवानादित्वेन प्रागवस्थारूपत्वौचित्यात्।

यदपि उद्धर्तृत्वादीनामपि सूत्रकृतैव गीतासु प्रतिपादनाज्जन्मादिसूत्रस्य सृष्टयाद्यष्टकर्तृत्वपरत्वं नावश्यंभावीति (त.मा.पृ. २८) तन्न। उद्धर्तृत्वादीनां गीतासूक्तत्वेपि जन्मादिसूत्रार्थत्वेनानुक्तत्वात्। सृष्टयाद्यष्टकर्तृत्वस्य तु स्कान्दे जन्मादि सूत्रार्थत्वेनोक्तत्वात्। माघमास माहात्म्ये शाण्डिल्यप्रकरणेपि तथैवोक्तत्वाच्च। न ह्यष्टानामेव ज्ञातव्यत्वमित्यस्ति नियम इति दूषणमपि व्यधिकरणत्वादुपेक्ष्यम्। सामान्येन सर्वगुणवैशिष्टयस्य, यावच्छक्ति तद्विशेषस्य च ज्ञेयत्वम्। सृष्टयाद्यष्टकर्तृत्वस्य तु विशेष रूपेणेत्यस्माभिरङ्गीकारात्।

यच्चोक्तम् शास्त्रारम्भ एव मोक्षहेतु ज्ञान जनकत्वस्य ज्ञाततया पुनरिह तदभिधानानपेक्षणादिति तदयुक्तम्। जन्मादिसूत्रे मोक्षहेतुत्वानुक्तौ तदुक्तपरामर्शकेन प्रथम सूत्रस्थातःशब्देनापि तदुक्तयसंभवात्। विषयवाक्यगत मोक्षदत्वपरामर्शे तु मोक्षदत्वाज्जिज्ञास्यत्वे बन्धकत्वादजिज्ञास्यत्वं किं न स्यादिति शंकोत्तरत्वेनाप्रसन्नस्य बन्धकत्वं प्रसन्नस्य च मोचकत्वमिति जन्मादिसूत्रे वक्तव्यत्वाच्च।

यदप्युक्तम् तत्कृतस्य वान्यकृतस्य वा बन्धस्यासौ मोचक इति ज्ञानस्यैव विचारप्रवर्तकत्वमिति (त.मा.पृ. २८) तदप्यविचारितरमणीयम्। अन्येन बद्धत्वे अनेन मोचनासंभव इतिशंकाया वारणीयत्वात्। लोकेऽन्येन बद्धस्यान्येन मोचन दर्शनेपि प्रकृते मम बन्धकः स्वतन्त्रश्चेत् तदिच्छाविरोधेनान्येन मोचनासंभवः। अस्वतन्त्रश्चेत्सोप्यन्येन बद्ध इति न कृत्स्नप्रपञ्चबन्धकत्वमिति विमर्शे जाते लोकदृष्टान्तस्यानिर्णायकत्वात्। ननु बन्धकत्वं वैषम्यनैर्घृण्यापादकत्वेन दोषत्वादकीर्तनीयम्। मैवम्। जीवैर्दुष्कर्मकारयितृत्वमपि दोषत्वेनाकीर्तनीयमित्यापत्तेः। तस्य दोषत्वं परिह्रियते चेत्समं प्रकृतेपि।

ब्रह्मणः सर्वकर्तृत्वाभिधानेन शास्त्रकर्तृत्वस्यापि लाभेन तज्जन्यज्ञानस्यापि तदधीनत्वलाभ इत्यपि (त.मा.पृ. २९) मन्दम्। शास्त्राजन्यज्ञानस्य तदधीनत्वालाभात्। त्वन्मते सर्व स्रष्टृत्वाभिधानेन स्थितिलयकर्तृत्वस्यापि लाभात् तयोरप्यवक्तव्यत्वापाताच्च। एतेन सृष्टौ स्थित्यनन्तर्भावेन तत्र पृथगुक्तावपि नियमनादेः स्थित्यन्तर्भावेन तत्र पृथगुक्तेरनपेक्षितत्वादित्यपि निरस्तम्। नियमनादेः स्थित्यनन्तर्भावस्य चन्द्रिकोक्तदिशानुभवसिद्धत्वाच्च। नित्यनैमित्तिक जन्मनां तादृशप्रलयानां च जन्मप्रलययोरिव नियमनादीनामपि स्थितावन्तर्भाव इत्यपि सामान्यविशेषभावभावाभावाभ्यां विशेषादयुक्तम्।

यदपि विचारविधित्वेन त्वदुदाहृते "यआत्मा अपहतपाप्मा" "नारायणं महा ज्ञेय" मित्यादौ श्रुतस्य सत्यकामत्व विश्वात्मत्वादेरपि ग्रहणापत्तिरिति (त.मा.पृ. २९) तदपि न। अपहतपाप्मत्वादिनोपासने तं यथा यथोपासत इत्याद्युक्तदिशा अपहतपात्मत्वादिरूप मोक्षप्रदो भगवानिति श्रुतितात्पर्यात्। अपहतपाप्मत्वादेः पृथग् लक्षणत्वे तात्पर्याभावात्। विश्वात्मत्वस्य विश्वनियामकत्वरूपस्याष्टकान्तर्भावाच्च। यच्चाप्नोति यदादत्त इत्याद्युक्तदिशाऽदानकर्तृत्वरूप नियामकत्वस्यैवात्मशब्दार्थत्वात्।

यत्तु स्कान्द इव भारतादौ लभते च ततः कामान् मयैव विहितान् हि तानिति सुखादिकर्तृत्वोक्त्या तस्यापि ग्रहणौचित्यमिति (त.मा.पृ. २९) तदपि सूत्रार्थत्वेनानुक्त्या पूर्वमेव निरस्तम्। किंच सुखदुःखानुभवरूपबन्धप्रदत्वोक्तौ सुखप्रदत्वस्य पृथगुक्तिः किमर्था। यदपि प्रतिहतसंकल्पस्य नियन्तृत्वानुपपत्त्या सत्यसंकल्पत्वस्यापि वक्तव्यत्वमिति (त.मा.पृ. २९) तदपि न। यस्मात्स हरिरेकराडित्युक्त्या एकराट्पदोक्तस्वातन्त्र्येणैव जन्मादिकर्तृत्वस्य सौत्रलक्षणत्व लाभे प्रतिहतसंकल्पत्वशंकानुन्मेषात्।

यदपि जन्माद्यस्य यत इत्यत्र यतःशब्देदंशब्दत्वलिंगेन यतोवेति वाक्यस्यैव विशिष्य प्रत्यभिज्ञानेन तदुपात्तजन्मस्थितिलयानामेव ग्रहणमिति तदतीव मन्दम्। विश्वतो मुखस्य सूत्रस्य यतोवेति वाक्यमात्रविषयकत्वासंभवात्। जिज्ञासाविधायक समस्त वाक्यविषयकत्वे स्थिते तादृशवाक्येषु कुत्रापि त्रितयातिरिक्तानुक्तेः शपथ निर्णेयत्वात्। यतोवेत्यत्रापि चतुष्टयोक्तेः समर्थितत्वाच्च। द्युभ्वाद्यायतनमित्यत्र यस्मिन् द्यौरित्यादि श्रुत्युपात्तान्तरिक्षादेरेव सौत्रादिपदेन ग्रहणमित्यप्यनभ्युपगम पराहतम्। समस्तविषयवाक्यानुसारेण सर्वायतनत्वस्यैव ग्रहणात्।

यच्चोक्तं जन्मादिकर्तृत्वस्य समुदायलक्षणत्वं श्रुतिसूत्रस्वारस्यावगतम्। श्रुतौ तावत् त्रिषु यच्छब्देषु सत्स्वपि यच्छब्देनैकेनैव प्रतिनिर्देशो मिलितलक्षणतां गमयति। अन्यथा प्रत्येकं तद्ब्रह्मेति निर्दिशेत्। एकेतरलक्षणं च न ब्रूयात्। न च व्यावर्त्या सिद्धिः शङ्क्या। शङ्कितव्यवच्छेदेनापि सप्रयोजनत्वादिति (त.मा.पृ. २९) तदतीव तुच्छम्। त्वयैव प्रत्येकलक्षणत्वपक्षे एतद्दोषाणां समाधेयत्वात्। लक्ष्यनिर्देशकैक्येन लक्षण प्रत्येकतानिरासस्य व्यधिकरणत्वाच्च। मिलितलक्षणत्वपक्षे शंकितव्यवच्छेदेन सप्रयोजनत्वे एकेतरलक्षणानामपि तथैव सप्रयोजनत्व संभवाच्च।

त्रितय कारणत्वोक्तावपि मोचकत्वाद्यनुक्त्या तदुपयुक्तज्ञानाद्यलाभादपूर्णत्वप्रसंगमाशंक्य यदुक्तं मुक्तेर्लयान्तर्भावादिति (त.मा.पृ. ३०) तदपि प्रागेव निरस्तम्। किंच मुक्तेर्लयान्तर्भावे सामान्यतो लयोपपादकातिशयलाभेपि असाधारणधर्मावच्छिन्न तदुपपादकातिशयलाभः कथमिति चिन्तनीयम्।

यदप्युपलक्षणस्योपलक्ष्यानुपपदकत्वशंका न युक्तेति (त.मा.पृ. ३०) तत्रोच्यते किमत्रोपलक्षणस्य व्यावृत्त्यर्थत्वमभिमतमुतोपलक्ष्योपपादकत्वमाहो उभयमपि। नाद्यः त्वयोपलक्ष्योपपादकत्वोक्तेः। न द्वितीयः प्रयोजनाभावात्। उपलक्ष्य निरतिशयबृह त्वव्यावर्त्य पूर्वपक्षाभावात्। तादृशबृहत्वाभावेगि धर्मस्य जिज्ञास्यत्वेन व्यभिचारात्। पूर्वपक्षानिरासकस्यापि सूत्र उक्तौ सूत्रत्वव्याघातात्। अत एव न तृतीयः। अतो व्यावृत्त्यर्थत्वमेवास्थेयम्। युक्तं चैतत्। जिज्ञास्यस्येतरव्यावृत्त्यप्रतिपादने न्यूनतापत्तेः पूर्वमीमांसामर्यादोल्लङ्घनापत्तेश्च। चोदनालक्षणोऽर्थो धर्म इत्यत्रार्थशब्देन व्यावर्त कलक्षणोक्तेः।

ननूपपादकत्वाभावे व्यावृत्यर्थत्वमपि न स्यादतो युक्तैव आकरेषूपपादकत्वोक्ति रिति चेन्मैवम्। एतच्छङ्कावारणार्थमेव हि व्यावर्तकं सर्वमुपलक्ष्योपपादकमिति न नियम इति चन्द्रिकायामुक्तम्। अतः कारणत्वस्योपलक्ष्योपपादकत्वेन सार्थक्योप पादनं व्यधिकरणम्। तदर्थत्वेन मिलितलक्षणत्वाश्रयणं च व्यर्थम्। प्रत्येकलक्षण-त्वेपि निरतिशय बृहत्व विपरीत शंका निवृत्तिसंभवात्। एतेन तद्यौगपद्यलिप्सया समुदायलक्षणत्वांगीकारोपि प्रत्युक्तः। यौगपद्ये प्रयोजनाभावात्।

यदपि स त आत्मा सर्वान्तरः स त आत्मान्तर्याम्यमृत इत्यादि बहुविधाभ्यासे-प्यन्तर्यामि भेदशंकाभाववत् प्रत्येकं तद्ब्रह्मेत्युक्तेपि ब्रह्मभेदशंकानुत्थानादिति (त.मा.पृ. ३०) तदपि मन्दम्। दृष्टान्तासंप्रतिपत्तेः। नहि तत्र तच्छङ्कापरिहारो न प्रदर्शित इत्येतावता स नास्त्येव। एतेनैव यतो वा इमानि भूतानि जायन्ते जीवन्ति नश्यन्ती त्येकदैवाभिधातव्ये पृथक्तदभिधानं ब्रह्मभेदशंकां कुतो न जनयतीति चोद्यमपि परिहृतम्। अनुक्तोपालम्भात्। ब्रह्मभेदशंका जायमानैव तद्ब्रह्मेति सकृत्प्रयोगेन समाधीयत इत्यस्माभिरुक्तत्वात्। विशेषणभेदमात्रेण ब्रह्मभेदं शंकितवतस्तव पृथगभिधानेपि न शंकेत्यश्रद्धेयमेतत्।

यच्चोक्तं यदि तु यत इत्यनुवादसूचक यच्छब्दबलेन सृष्टिस्थितिलयकारणता-बोधकस्यास्य तदर्थकवाक्यान्तरार्थानुवादरूपतावगमात् तस्य च सदेवेत्यादौ कारण त्वावगमान्न शंकेति विभाव्यते तर्हि तद्वदत्रापि न तच्छङ्केति (त.मा.पृ. ३०) तदपि न। प्रकृतवाक्य एव शंकानिवारकस्य लाभसंभवे वाक्यान्तरानुसरणवैयर्थ्यात्।

यदप्युक्तं दृष्टान्तश्चासंप्रतिपन्नः। तत्र जडबद्धमुक्तनित्यव्यावृत्त ब्रह्मस्वरूप प्रतिपत्ति प्रयोजनकतया समुदायलक्षणत्वस्यैव श्रीमद्भाष्यादौ उपपादितत्वादिति तदपि तथोपपादनस्यानुपलंभादश्रद्धेयम्। जडजीवजातीयताव्यावर्तकतया कार णत्वासाधारण्य प्रतिष्ठापनार्थत्वमपि सत्यत्वादिलक्षणस्यालौकिकम्। व्यावृत्ति व्यवहारान्यतर प्रयोजनकत्वाल्लक्षणस्येति।

एतेन योवेदेत्युत्तरवाक्यस्थविधिक्रियापेक्षित कर्मसमर्पकतया द्वितीयान्तपद समुदायरूपे तत्र ब्रह्मपदश्रवणशंका बुद्ध्यारूढा न भवतीति प्रत्युक्तं। निहितं गुहाया मित्यनेनैव कर्मसमर्पणात् सत्यादिपदानां द्वितीयान्ततानाश्रयणात्।

यच्चोक्तं समुदायलक्षणत्वं श्रौतैकधानिर्देशानुगुणं न हातव्यमित्युक्तेरौत्सर्गिकनियमोपजीविन्या व्यभिचारप्रदर्शनेन परिहारस्य व्यधिकरणत्वादिति तदत्यन्तासंगतम्। व्यभिचारस्थल एवौत्सर्गिक नियमसिद्धस्य स्वीकारायोगात्। प्रकृते जन्मादीत्येकधा निर्देशस्यास्माभिरौत्सर्गिकनियमव्यभिचारस्थलत्व प्रतिपादनात्। त्वयापि तदङ्गीकाराच्च। तथाहि वाक्यार्थ योजनायामुक्तं प्रत्येकलक्षणत्वमेव युक्तम्। नतु समुदायलक्षणत्वम्। व्यावर्त्याभावादिति त्वयोक्तम्। एतदेव च चन्द्रिकाप्रकाश उक्तम्-ननु सास्नादौ प्रत्येकमतिव्याप्ते र्बाधकात् समुदायलक्षणत्वम्। नच बाधकायत्तो व्यभिचारो दोषावह इति चेत्तर्हीहापि व्यावर्त्याभावाद्बाधकात् प्रत्येकमेव लक्षणमस्त्विति। इह तु प्रत्येकोपलक्ष्याकाराणां सत्वात् समुदायलक्षणत्वेपि न वैयर्थ्यमिति तु पूर्वं निरस्तम्। वस्तुतस्त्वित्यादिना स्वसंमतसमुदायलक्षणत्व निराकरणमपि उन्मत्तप्रलपितवदुपेक्ष्यम्।

यदपि कारणत्वमकारणेभ्यो वैलक्षण्यं स्वाश्रयस्य संपादयदप्यकारणान्तर्गत जडजीवगत जडत्व जीवत्वाभिव्यञ्जक सोपाधिकसत्ताश्रयत्व संकुचित ज्ञानत्वाद्याश्रयत्वज्ञानप्रयुक्तं जडजीव जातीयत्वशंकां नापह्नोतुं शक्नोति। तयोः परस्परविरहरूपत्वाभावात्। सत्यत्वादिकं तु निरुपाधिक सत्ताश्रयत्वरूपतया तदभावरूपमिति जडजीवजातीयत्वशङ्कामपह्नुते। यद्यपि कारणत्वमपि वस्तुतो जडत्वजीवत्वाभाव व्याप्यं तथापि नेदानीं तज्ज्ञानं संभवति। तद्धर्माभिव्यञ्जक धर्मान्वयाधीन तज्जातीयत्वशंकया तत्प्रतिबन्धात्। इयांस्तु विशेषः। घटेऽभिव्यञ्जक धर्मान्वयधीः प्रमारूपा। इह तु भ्रमरूपेति। इति (त.मा.पू. ३२) तदपि न। त्वया कारणत्वस्य निरतिशय बृहत्वोपपादकत्वांगीकारेण तादृशबृहत्त्वस्य सोपाधिकसत्ताश्रयत्वादि धर्मान्वय भ्रम विरोधित्वात्। यदि तादृशबृहत्त्वसिद्धिः सत्यत्वादिलक्षणज्ञानाधीना तर्हि जन्मादि समुदायस्य लक्षणत्वाश्रयणवैयर्थ्यम्। जन्मरूपेणैकेनैव लक्षणेन वैलक्षण्य संपादनात् वस्तुतस्तु सत्यत्वादिनैव वैलक्षण्य वैजात्योभयसिद्धौ तदेव जन्मादि सूत्रे वक्तुमुचितम्। लाघवात्। किंच ब्रह्मणि जडत्व जीवत्वव्यञ्जकधर्मान्वयधीरेवासंभाविता। उभय व्यञ्जकैकधर्माप्रसिद्धेः। प्रत्येक व्यञ्जक धर्मद्वयस्यैकत्र विरोधात्। अतः पुरुष भेदेन भ्रमकारणस्य व्यवस्थिततत्वेन प्रत्येकव्यञ्जकधर्मद्वयमध्येऽन्यतरस्य यस्य धीः जडजीव जातीयत्व शंकाकारणं तद्विरोधिनः सत्यत्वाद्यन्यतमस्य तादृशशंकावारकत्वं वक्तव्यम्। न तु सत्यत्वादिसमुदायस्य। एवंच समुदायलक्षणत्वोक्तिरयुक्ता स्यात्।

यदुक्तं सूक्ष्म चिदचिद्विशिष्टस्य ब्रह्मणो लक्षणमिदं जगज्जन्मादि कारणत्वमिति ततो विशिष्टस्येतरव्यावृत्तितद्वैजात्यसिद्धावपि केवल विशेष्यस्य विशेषणभूत चिदचित्साजात्य शंकायां तद्व्यावर्तनार्थं स्वरूपलक्षणपरं सत्यत्वादिवाक्यमस्तु। वस्तुतो यतोवेति श्रुत्या ब्रह्मण्युपादानत्वस्याप्यभ्युपगमात् तस्य च मृदादौ विकारादि सहचरितत्व दर्शनात् ब्रह्मण्यपि तत्प्रयुक्त दोषशंकावारणाय निरुपाधिक सत्यत्वादि प्रतिपादकं सत्यादि वाक्यमिति न तद्वैयर्थ्यमिति (त.मा.पृ. ३३) तदप्ययुक्तम्। विशिष्ट लक्षणस्य विशेषणे वृत्तौ विशिष्टस्य विशेषणाद्व्यावृत्ति वैजात्यासिद्धि प्रसंगात्। अवृत्तौ तस्य सत्यत्वादेरिव केवलविशेष्ये विशेषणभूत चिदचिद्व्यावृत्तिवैजात्य संपादकतया सत्यत्वादि लक्षणानां कृत्याभावात्। यतोवेति श्रुतौ ब्रह्मण उपादानत्वोक्त्ययोगस्य समर्थितत्वाच्च। अस्तु वा ब्रह्मण उपादानत्वम्। तथापि प्रकृति द्वारैवोपादानत्वं ब्रह्मलक्षणत्वेन वक्तव्यम्। अन्यथा प्रकृतावतिव्याप्तेः। ईदृशोपादानत्वस्य च मृदादावदर्शनेन विकारादिसहचरितत्वदर्शनोक्तिरयुक्तैव। किंच सत्यत्वादेर्लक्षणस्य व्यावृत्तिव्यवहारप्रयोजनत्वं विहाय विकारादिदोषशंकानिवारणार्थत्वं वदतस्तव कथं नाकौशलम्।

आपातप्रतीति मात्र साध्यायां जिज्ञासायां गुणपूर्तेरकारणत्वादिति (त.मा.पृ.३४) तु बालिशम्। गुणपूर्ति प्रतीतिमन्तरा आपात प्रतीतेरेवायोगात्। जीवस्य स्वप्रकाशत्वेन सिद्धत्वात् तदन्यस्य च प्रमाणाभावेनाभावात् जिज्ञासा न कर्तव्येति शंकायां सिद्धजीवातिरिक्तवस्तुसद्भावे गुणपूर्तेरेव हेतुतयोपादानस्यावश्यकत्वात्। श्रुतिप्रतिपन्नस्ववाक्यगतकारणत्वस्यैव जिज्ञासाकर्तव्यत्वहेतुत्वोक्तिरपि श्रुतिप्रतिपन्न स्ववाक्यगतब्रह्मपदोपात्त गुणपूर्तेरेव हेतुत्वसंभवेन विनिगमनाविरहादयुक्ता। वस्तुतस्तु प्रथमप्रतिपन्न गुणपूर्तेरेव हेतुत्वं युक्तम्। तद्विजिज्ञासस्वेत्युक्ते किमिति प्रश्नस्योत्तरत्वेन प्रथमं ब्रह्मेति गुणपूर्ति विशिष्टोक्तेः।

वैलक्षण्यमात्रोक्तौ तदुपयोगानिरूपणादित्यप्यज्ञानविलसितम्! गुणपूर्त्यसंभावनाशंकानिरासाय कारणत्वोक्तिरित्यस्मत्सिद्धान्तात्। नच कारणत्वमप्यसंभावितम्। कार्यत्वहेतुना प्रागेव सामान्यतः कारणानुमानात्। गुणपूर्तिस्तु कुत्रापि प्राग दृष्टा। प्रत्युत तद्विरुद्धाल्पगुणत्वमेव दृष्टमित्ययं विशेषः। ननु कारणत्वं जीवसाधारणं चेत् न तत् गुणपूर्त्यसंभावनामपोदितुमलम्। नो चेत् तादृशकारणत्वोपेतजिज्ञास्ये प्रयुक्तस्य ब्रह्मशब्दस्य जीवरूढिशंका न युक्ता। मैवम्। अदृष्ट द्वारा विश्वकारणत्वस्य जीवसाधारण्येन जीवरूढिशंकाया उपपत्तेः। तर्हि जीवसाधारण्ये निराकृते ततएव जिज्ञास्यस्यापात प्रतीतौ गुणपूर्तेर्वैयर्थ्यमिति चेन्न। तत्सार्थक्यस्योक्तत्वात्।

यदपि बृह्जातीत्यादिस्तु न धातुपाठे दृश्यते। न च युज्यते। क्रियापरत्वाभावादिति (त.मा.पृ. ३४) तद्दुराग्रहमात्रम्। अन्यथा इन्द्रः शचीपतिः। बलेन पीडित इत्यादि त्वद्भाष्योदाहृत श्रुतिरपि न दृश्यत इति कल्पितत्वापातात्। गडि वदनैकदेशे इत्यस्यापि क्रियापरत्वाभावेनायुक्ततापत्तेश्च। वृद्धिक्रियापरत्वं जीवे तद्वाधादयुक्तं चेत् घटचेष्टायामिति धातोरपि चेष्टाया घटे बाधादयुक्तता स्यात्। वस्तुतस्तु रूढिसिद्धचर्थमेव धातुपाठोदाहरणात् क्रियानन्वयस्तत्र गुण एवेति द्रष्टव्यम्।

यदपि रूढचोरविलम्बतप्रतीतिकत्वाविशेषात् विद्वद्गतत्वाज्ञगतत्वाभ्यां व्यवस्था न शक्येति (त.मा.पृ.३४) तत्पूर्वमेव निरस्तम्। विद्वद्रूढेः प्राबल्याभावे यो देवानां नामधा एक एवेति श्रुत्या तत्तद्देवतास्वनुशासनसिद्धसकलनामवत्त्वं ब्रह्मण एवेति नोच्येत। तदेव ब्रह्म परममिति कविमतत्वहेतुना ब्रह्मण एव मुख्यतः ब्रह्मशब्दवाच्यत्वमपि नोच्येत। शिष्टाकोपाधिकरणे श्रौतक्रमस्य स्मृत्या बाधस्तु स्मृतेर्निरवकाशत्वात्। प्रकृते श्रुत्यनुशासनयोरुभयोरपि निरवकाशत्वादज्ञरूढित्वविद्वद्रूढित्वाभ्यां व्यवस्थां विना गत्यन्तराभावात्।

योगस्यानतिप्रसक्तत्वान्न रूढिर्ब्रह्मणीति पूर्वपक्षवर्णनं दूषयितुं ब्रह्मगुणेष्वतिप्रसंग इति (त.मा.पृ. ३५) यदुक्तं तद्वचधिकरणम्। ब्रह्मगुणेषु स्वरूपतो बृहत्त्वम्। योगार्थस्तु गुणतो बृहत्त्वमिति। यदि गुणतो बृहत्त्वमपि गुणेष्विति ब्रूषे तर्हि निरतिशयबृहत्त्वरूपस्य तस्य जन्मादिसमुदायकारणत्वोपपाद्यस्य ब्रह्मलक्षणत्वं त्वदुक्तं व्याहन्येत। निरतिशयबृहत्त्वौपयिकत्वात् समुदायकारणत्वं लक्षणमिति श्रुतप्रकाशिकापि आकुलिता स्यात्। निरतिशय बृहत्वस्य गुणेषु सत्वे तदौपयिकसमुदायकारणत्वस्यापि तत्र सत्वावश्यम्भावेन ममुदायकरणत्वरूपलक्षणस्य गुणेष्वतिव्याप्त्यापत्तेः। ब्रह्मणोऽत्यन्तभिन्ना हि तद्गुणास्तव मते।

एतेन यदुक्तं सिद्धान्ते कारणत्वेन जीवरूढिबाधनमपि न युक्तं। तज्जातीयत्वशंकां प्रति कारणत्वस्याविरोधित्वोक्तेः। अदृष्टद्वारा तत्रापि तदुपपत्तेश्च। न ह्यद्वारकं जन्यत्वं जातादिपदार्थः सिद्धान्तेपि तदसंभवादिति (त.मा.पृ. ३५) तदपि निरस्तम्। व्यधिकरणत्वादेव। अदृष्टाद्वारकजन्यत्वस्य जातादिपदार्थत्वात्। तद्द्वारकजन्यत्व परत्व विवक्षायाममुख्यार्थत्वापत्तेः। तज्जातीयत्वशंकां प्रति कारणत्वस्याविरोधित्वं तु चन्द्रिकायां निपुणतरं दूषितम्।

यत्तु यदि भूतपदमचिन्मात्रपरं तदा साक्षादपि तज्जन्यत्वमविरुद्धम्। यदि चेतनाचेतनोभयपरं तदा न जीवपूर्वपक्षोत्थानम्। मोक्षप्रदत्वं चाभिसंविशन्तिपदोक्तं कथं पूर्वपक्षोत्थानं न प्रतिबध्नीयात् इति (त.मा.पृ. ३५) तन्मन्दम् भूतपदमचिन्मात्र-

परमिति पक्षेपि इमानीति सर्वनाम्ना विशेषणेन सर्वाचिल्लाभेन तत्र जीवजन्यत्वबाधेन सिद्धान्तोपपत्तेः। तादृशविशेषणानाकलनेन च जीवपूर्वपक्षोत्थानात्। वस्तुतस्तु भूतपदं पूर्वपक्षेऽचिन्मात्रपरम्। सिद्धान्ते चेतनाचेतनोभयपरमिति न कोपि दोषः। अभिसंविशन्तिपदावष्टम्भेन पूर्वपक्षानुत्थानोद्भावनं तव न युक्तम्। तत्पदस्य मोक्ष परत्वं हि सिद्धान्तिनस्तवैव न ज्ञातम्। किमुतास्मत्पूर्वपक्षिणो वराकस्येति।

अथ जिज्ञासाविधेरप्रामाण्येन पूर्वपक्षोत्थानमुच्यते तर्ह्यप्रामाण्येनैव पूर्वपक्षोत्थान सौलभ्ये किमिति जीवपूर्वपक्ष इष्यत इति चोद्यमपि (त.मा.पृ. ३५) न युक्तम्। यदंशे बाधोपस्थितिः तदंशमात्रेऽप्रामाण्यमित्यस्मत्पूर्वपक्षिणा प्रत्यवस्थानात्। भवांस्तु तादृश विवेकशून्यः कथमिति न विद्मः। जीवातिरिक्तब्रह्मणोऽभावात् जीवस्य च स्वप्रकाशत्वेन नित्यसिद्धत्वाज्जिज्ञास्यत्वं बाधितमिति तदंशे श्रुतेरप्रामाण्यमस्माभिः पूर्वपक्षितम्। त्वयापि अतो न लक्षणतो ब्रह्म प्रतिपत्तुं शक्यत इत्युक्तवता लक्षणतो ब्रह्मप्रतिपादनपरयतोवेति श्रुतेरप्रामाण्यमेव पूर्वपक्षितम्। तत्र लक्षणतो ब्रह्मप्रति पादनांशे बाधोपस्थित्या तदंशमात्रे श्रुत्यप्रामाण्यमिष्टं चेत् समं प्रकृतेपीति पश्यतु भवान्।

नारायणोऽसौ परमो विचिन्त्य इति जिज्ञास्ये नारायणपदश्रवणादपि न जीवपूर्व पक्षसंभव इति तु (त.मा.पृ. ३५) उपहास्यम्। जिज्ञास्ये नारायणपदश्रुतेः सिद्धान्त युक्तित्वात्। त्वत्पक्षेप्येवमेव सर्वाधिकरणेषु तत्तत्सिद्धान्तयुक्तिप्रदर्शनेन पूर्वपक्षानुत्थानं मयोद्भाव्यते चेत्तवापि का गतिः।

ब्रह्मशब्दावयवार्थगुणपूर्त्या जीवभेदे पूर्वाधिकरणसिद्धे पुनरिह कथं जीवपरत्व शंकेत्यादिका तु सर्वापि कुचोद्यपरम्परा (त.मा.पृ. ३५) चन्द्रिकायामनूद्य परिहृता। कारणत्वरूपनिरवकाशलिङ्गसहकृतया तादृशयोगश्रुत्या रूढिभङ्गमप्याशंक्यादृष्टद्वारा कारणत्वस्य जीवे सावकाशत्वेन परिहार उक्तः। तमाच्छाद्यैव त्वया तदाच्छादनेन पूर्वपक्षस्तु सति संभवे न युक्त इति प्रलपितम्। त्वदीयपूर्वपक्षस्य पूर्वमेव निरस्तत्वात् त्वयैव तस्य भ्रममूलकत्वोक्तेश्च यत्किञ्चिदेतत्।

यच्चोक्तं विद्वद्रूढिर्वैदिकी स्यात् सा योगादेव लभ्यत इति तूपहास्यम्। प्रोक्षण्यधिकरणे योगस्य रूढिविरोधित्वसमर्थनादिति (त.मा.पृ.३७) तदपि धूलिप्रक्षेप मात्रम्। वाजपेयाधिकरणे पेयभूतवाजरूपायाः सुरायाः संबन्धेन निमित्तेन वाजपेय शब्दस्य यागनामधेयतेति स्वीकारेण योगस्य रूढ्यविरोधित्वात्। न च तत्र योगस्याति प्रसक्त्या रूढिसमाश्रयणम् अन्यत्र सुराया अपेयत्वात्। अतःप्रकृते महायोगस्यानति प्रसक्तत्वेपि विद्वद्रूढ्यङ्गीकारे न कोप्युपहासावसर इति द्रष्टव्यम्।

# अथ शास्त्रयोनित्वाधिकरणम्

## ॐ शास्त्रयोनित्वात् ॐ

उक्तलक्षणस्य रुद्रादावतिव्याप्तिमाशंक्य निरस्यत इति संगतिः । यतोवेत्यादि वाक्योक्तं जगत्कारणत्वं विष्णोरन्यस्यापि वेति संदेहः। अन्यस्यापीति पूर्वपक्षः। अनुमानेन रुद्रादावपि जगत्कारणत्वस्य सुसाधत्वात्। तथाहि क्षित्यादिकं सकर्तृकं कार्यत्वाद्घटवदित्यनुमानेन कर्तृमात्रसिद्धावपि तस्यानुमानस्य नावेदविदिति स्वप्रामाण्यनिषेधकश्रुत्युक्ते विष्ण्वाख्ये कर्तर्यपर्यवसानेन पाशुपताद्यागमोक्ते शिवादि कर्तर्येव पर्यवसानाद्वा शिवो जगज्जन्मादिकर्ता सर्वज्ञत्वात् व्यतिरेकेण कुलालवदित्यनुमानेन वा शिवादिकारणत्वसिद्धिः । न च सर्वज्ञत्वमप्रसिद्धम् । पाशुपताद्यागमेन तत्सिद्धेरित्यागमसहायानुमानावलम्बेन वा, कार्यत्वाद्यनुमानेन नित्यज्ञानेच्छाप्रयत्नमात्रवतः नित्यप्रयत्नमात्रवतो वा कर्तुः सिद्धेः तादृशस्य सिद्धान्तिना विष्णुत्वानङ्गीकारात् संहर्तृत्वादिना रुद्रादिशब्दोक्ते विष्ण्वन्यस्मिन्नेव तदनुमानस्य पर्यवसानात् केवलानुमानेन वा एकःपूर्वःपक्षः । न चात्र विष्णुमात्रकारणत्वपरोदाहृतश्रुतिविरोधः । तासामुक्तानुमानविरोधेन विष्णुमात्रकारणतापरत्वाभावादिति। अपरस्तु सर्वज्ञशिवादि प्रणीततयानाशंकितदोषेण पाशुपताद्यागमेन रुद्रादेरपि जगत्कारणत्वप्रतीतेः रुद्रादिर्जगत्कर्ता। न च पौरुषेयत्वेन स्वतः प्रामाण्यकेन वेदेन विष्णोरपि जगत्कारणत्वप्रतीतेस्तद्विरोधः। द्वयोरपि कालादिभेदेन कर्तृत्वस्याविरोधात्। वेदे आगमे चेदंसर्वमसृजतेति विष्ण्वादेः सर्वकर्तृत्वोक्तेः तत्तत्कालसृज्यसर्वपरत्वेन योग्यतापरत्वेन वोपपत्तेः। वेदे शिवस्यागमे च विष्णोः कारणतानिषेधस्योदितहोमादि निन्दाया अनुदितहोमादि स्तुतिपरत्वमिव विष्ण्वादिकर्तृताविधिपरत्वसंभवादित्यागमावलम्बी। एवं च सर्वजगज्जन्मादिकर्तृत्वं लक्षणं चेदसंभवः। कतिपयकर्तृत्वं चेदतिव्याप्तिरिति न लक्षणं युक्तमिति पूर्वपक्षफलम् ।

सिद्धान्तस्तु चक्षुरादे रसगन्धादाविवोक्तानामवेदमूलानुमानानां नावेदविन्मनुते तं बृहन्तम् औपनिषदःपुरुष इत्यादिश्रुत्या जगत्कारणे प्रामाण्यनिषेधात् शशादीनां विषाणित्वादावपि प्रयोक्तुं शक्यत्वेनातिप्रसक्त्यार्थासाधकत्वादाद्यः पूर्वपक्षो न युक्तः। तथा प्रमाणत्वेनाङ्गीकृतश्रुतिपरिगृहीतया ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकमित्यादिस्मृत्या दुरागमाप्रामाण्यस्योक्तत्वात् आगमावलम्ब्यपि नेति विष्णोरेव जगत्कारणत्वम्। अतो न लक्षणमतिव्याप्तमिति सिद्धान्ते फलम्।

केचित्तु यदि कारणमेव ब्रह्म तदा तदनुमानेनैव सिद्धमिति किं शास्त्रेणेति शकाव्यावृत्तये तस्यानुमानिकत्वं व्यावर्तनीयम्। तद्व्यावृत्तिश्च शास्त्रप्रमाणकत्वाभिधानेनेत्याहुः। (त.मा.पृ. ३७) तन्न कारणस्यानुमानिकत्वेन कारणावबोधिशास्त्रस्य विचार्यत्वासंभवेपि तदतिरिक्तशास्त्रस्य तत्संभवात्। यदत्रोक्तं किमङ्ग पुनरकारणविषयमपि शास्त्रं दृश्यते। कारणमेव हि उपास्यतया प्राप्यतया तदनुगुणगुणवत्तया च कृत्स्नेन शास्त्रेण प्रतिपाद्यते स्वरूपनिरूपणमपि हि तदपेक्षितमिति (त.मा.पृ. ३८) तत् स्वव्याहतम्। त्वयैवोत्तरत्र (त.मा.पृ. ४७) आनुमानिकत्वे हि कर्तृत्वोपयुक्तज्ञानशक्त्यादिगुणसिद्धावपि सर्वोपासनासाधारणानन्दाद्यसिध्यापत्तेरिति वदता कारणत्वाननुगुणा अपि गुणा भगवतोऽङ्गीकृताः। युक्तं चैतत् स्वशक्तेरेकांशमात्रेणैव भगवता जगत्सर्जनात्। तथाहि श्रुतिः पादोस्यविश्वाभूतानीति। तथाच कारणत्वाननुगणाधिकशक्त्याद्यनन्तगुणानामनन्तवेदेषु प्रतिपादनेन शास्त्रमात्रस्याविचार्यत्वकथनं साहसमात्रम्। वस्तुतस्तु कारणमेवोपास्यतया कृत्स्नशास्त्रप्रतिपाद्यमित्यपि स्वव्याहतं प्रमाणविरुद्धं च। त्वयैव सर्वोपासनासाधारणानन्दाद्यसिध्यापत्तेरित्युक्तेः। सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चितेत्यादिप्रमाणैः आनन्दादिचतुर्णमेव सर्वोपास्यत्वसिद्धेश्च।

यदपि सदादिवाक्यप्रतिपन्नं कारणमनूद्य तस्य ब्रह्मत्वं विधीयते। तच्च प्रष्ट्रा प्रागवगतम्। कारणत्वं च वाक्यान्तरावगतमिति तयोःपरस्परसामानाधिकरण्यात् या गन्धवती सा पृथिवीत्यत्रेव लक्ष्यलक्षणभावप्रतिपत्तिरार्थिकी विषयो भवतीति (त.मा.पृ ३८) तदपि तुच्छम्। त्वद्भाष्यटीकयोः कारणमनूद्य लक्षणत्वविधानमित्युक्तेः। किंच परस्परसामानाधिकरण्यमात्रेण लक्षणत्वाक्षेपे ब्राह्मणा दरिद्रा इत्यत्रापि दरिद्रत्वस्य ब्राह्मणलक्षणत्वाक्षेपप्रसंगात्। नच सामानाधिकरण्यस्य लक्षणत्वबोधकत्वमौत्सर्गिकमिति वाच्यम्। व्यभिचारस्थलानामेव बहुलमुपलम्भात्। न चोद्देश्यविधेयभावमहिम्ना लक्षणत्वलाभ इति वाच्यम्। उद्देश्यतावच्छेदके विधेयव्याप्यत्वस्योत्सर्गतो भानेपि तावन्मात्रेण लक्ष्यतावच्छेदकसमनियतत्वरूपलक्षणत्वालाभात्। ननु परस्परोद्देश्यविधेयभावविवक्षया समनैयत्यलाभ इति मैवम् विधेयभेदात् वाक्यभेदापत्त्या परस्परोद्देश्यविधेयभावविवक्षाया अयुक्तत्वात्।

यदि लक्षणशब्दव्यवहार्यत्वरूपं लक्षणत्वमार्थिकार्थ इतीष्यते तदापि व्याप्यस्य लक्ष्यतावच्छेदकसमनियतत्वस्य प्रतीतिमन्तरा तदाक्षेपासंभवेन लक्षणया तत्प्रतीतौ समाश्रयितव्यायां वरं लक्षणत्वस्यैव लक्षणया प्रतीतिरित्यास्थीयताम्। किमन्तर्गडुना। किं च लक्षणत्वस्यार्थिकार्थत्वे लक्षणवाक्यमात्रस्य सिद्धार्थबोधकत्वेनाप्रामाण्यप्रसंगात् लाक्षणिकत्वमेव वक्तव्यम्। तथाहि अस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति प्रश्नकर्त्रा प्रकृष्टप्रकाशः चन्द्र इति लक्षणवाक्ये प्रकृष्टप्रकाशस्य प्रत्यक्षेणैवावगतत्वात् चन्द्रप्रातिपदि

कार्थस्य च पूर्वं तेनानवगतत्वे प्रश्नस्यैवायोगात् वाक्यस्य सिद्धार्थबोधकत्वेनाप्रामाण्य प्रसंगः। न च चन्द्रप्रकृष्टप्रकाशयोरभेदबोधनेन सिद्धार्थत्वपरिहारः। यस्य प्रकृष्टप्रकाशे तद्भिन्ने च चन्द्रत्वबुद्धिः प्रसक्ता तं प्रति प्रयुक्तस्य अस्य वाक्यस्य सिद्धार्थत्वापरिहारात्। तत्परिहाराय प्रश्नवाक्यं किं चन्द्रलक्षणमित्यर्थकम्। उत्तरवाक्यं च लक्षणया प्रकृष्टप्रकाशत्वस्य चन्द्रलक्षणत्वप्रतिपादकम् इति वक्तव्यम्। किं चैवमार्थिकबोधाङ्गीकारेण लक्षणापलापे लक्षणामात्रोच्छेदप्रसंगः। गङ्गापदेन तीरबोधस्याप्यार्थिकत्वापातात्। तत्र मुख्यार्थबाधेनाप्रामाण्यपरिहाराय लक्षणाश्रयणं चेत् प्रकृते सिद्धार्थबोधकत्वेनाप्रामाण्यपरिहाराय लक्षणाश्रयणमित्यस्तु। न च याथार्थ्यमेव प्रामाण्यम् तच्च सिद्धार्थेप्यस्तीति वाच्यम्। यादृच्छिकसंवादिप्रतारकवाक्येऽति प्रसंगात्। वक्तृतात्पर्यविषयीभूत यथावस्थितार्थबोधकत्वं वाक्यप्रामाण्यं चेत् सिद्धार्थे वक्तृतात्पर्यायोगात् तद्बोधकस्याप्रामाण्यमपरिहृतं स्यात्। नच यथा न्यायान्तर्गतनिगमनवाक्यस्य सिद्धार्थबोधकत्वेपि अबाधितत्वादितात्पर्यकल्पनया प्रामाण्योपपत्तिस्तथा प्रकृतेपीति वाच्यम्। प्रतिवादिन्याप्तत्वानिश्चयेन न्यायवाक्यस्य शब्दविधया प्रामाण्यानङ्गीकारात्। व्याप्त्यादिस्मारकत्वेनैव तदुपयोगात्। प्रकृते शब्दविधयैव प्रामाण्ये वक्तव्ये सिद्धार्थबोधकत्वपरिहारं विनाऽगतेः। यदि शाब्दयामीत्यनुभव एवात्र लक्षणाकल्पकः तर्हि समं लक्षणवाक्येपि। अत एवेदं लक्षणवाक्यमिति व्यवहारोप्युपपद्यते। लक्षणत्वस्यार्थिकार्थत्वे हि तथा व्यवहारो न स्यात्। अन्यथा पीनो देवदत्तो दिवा न भुङ्क्ते इति वाक्यं रात्रिभोजनवाक्यमिति व्यवह्रियेतेति।

एतेन कारणत्वस्य लक्षणत्वमानुमानिकमिति पूर्वपक्षयितव्यम्। तदेव शास्त्रयोनीति सिद्धान्तयितव्यमिति चन्द्रिकोक्तदूषणपरिहाराय यदुक्तं तथाकल्पनां विनानुपपत्त्यभावादिति (त.मा.पृ. ३८) तदपि निरस्तम्। कारणत्वस्यानुमानिकत्वेन श्रुतेस्तदनुवादकत्वेपि पूर्वोक्तरीत्या तस्य लक्षणत्वं लक्षणया बोध्यते चेत् शास्त्रस्य सिद्धार्थमात्र बोधकत्वपूर्वपक्षो न सिद्ध्येचत् अतस्तत्सिध्यर्थं लक्षणत्वमानुमानिकमिति पूर्वपक्षयितव्यम्। अज्ञानमूलकपूर्वपक्षो यद्यपि नालौकिकः। तथापि लोकप्रसिद्धं लक्षण वाक्यस्य लक्षणत्व प्रतिपादकत्वं पूर्वपक्षिणो न ज्ञातमित्यसंभवदुक्तिकमेवेति।

यदप्युक्तं सत्यकामत्वादिविषयविचाराय शास्त्रारम्भशङ्कापि गलहस्तिता। कर्तृत्वोपयुक्तानां तत एवाक्षेपात् धर्मिसिद्धिकाले एव तेषां सह सिद्धेः। अन्यथा कारणत्वोपयुक्तगुणनिश्चये कारणत्वनिश्चयः तन्निश्चये च तत्र गुणविधिरिति अन्योन्याश्रयादिति (त.मा.पृ. ३९) तदपि कर्तृत्वानुपयुक्तानामपि गुणानां शास्त्रप्रतिपाद्यत्वमुपपादितवद्भिरस्माभिः पूर्वमेव निरस्तम्। सर्वगुणानां धर्मिणा सह सिध्यंगीकारे गुणबोधकानां सिद्धार्थत्वापत्तेश्च। कतिपयगुणानामेव धर्मिणा सह सिद्धिश्चेत्तद्भिन्नगुणप्रतिपादक

शास्त्राणामारम्भे कानुपपत्तिः। किंच तदुपयुक्तनिश्चयात् पूर्वं प्रमाणान्तरेण तन्निश्चये तदन्यथानुपपत्त्या तदुपयुक्त निश्चयो जायमानोऽनुभवसिद्धः। स एव चेदन्योन्याश्रयेण त्वयापलप्यते किमङ्ग तर्हि तवार्थापत्तिर्नाम। एतेनोक्तरीत्या शास्त्रमात्रविचाररूपत्वादिति त्वदुक्तमपि गलहस्तितम्।

यतो येन यदिति यद्वृत्तयोगात् कारणमनूद्यते तस्य ब्रह्मत्वं विधीयते तेन कारणत्वस्य ब्रह्मलक्षणत्वं फलितमिति तव टीकाग्रन्थस्तु (त.मा.पृ. ३९) त्वयैवापहस्तितः। तथाहि पूर्वमानुमानिककारणानुवादेन ब्रह्मत्वविधिपक्षस्त्वया निराकृतो यथा "ब्रह्मत्वं च नाज्ञातम् अधीहि भगवो ब्रह्मेति प्रश्नविरोधात् तद्वचक्तिवृत्तितया तन्न ज्ञातमिति चेत्तर्हि तदेव विधेयं स्यात् न कारणत्वस्य लक्षणत्वमिति" (त.मा.पृ. ३८) एतदेव हि दूषणं सदादिवाक्यप्रतिपन्नकारणानुवादेन ब्रह्मत्वविधिपक्षेऽप्युपतिष्ठते। विशेषाभावा दिति। सदादिवाक्यप्रतिपन्नकारणवृत्तित्वेन ब्रह्मत्वं न ज्ञातमिति तेन रूपेण ब्रह्मत्व विधिसंभव इति चेत् "नह्यत्रानुमानिककारणानुवादेन ब्रह्मत्वविधिसंभवः" इति वचनं रिक्तं स्यात्, आनुमानिककारणवृत्तित्वेन ब्रह्मत्वस्याज्ञातत्वेन आनुमानिककारणानुवादेन ब्रह्मत्वविधिसंभवात्। किंच सिद्धकारणमनूद्य ब्रह्मत्वविधानमात्रेण कारणत्वं ब्रह्मलक्षणमिति प्राप्तमिति कथमायुष्मता प्रतिपद्यते? न हि होम मनूद्य दधिकरणकत्वविधाने होमस्य दधिकरणकत्वं लक्षणमिति प्राप्नोति। या गन्धवती सा पृथिवीत्याद्युदाहरणं तु लक्षणया लक्षणत्वबोधकमिति प्रागेवोक्तम्।

दुरागमाप्रामाण्यस्य शिष्टाकोपाधिकरणन्यायसिद्धतया पुनरिहतदाशंकानुत्थानात् तेषां समयपादनिरस्यानामिहानिरस्यत्वाच्चेति (त.मा.पृ. ४०) त्वदुक्तं च अस्माभिः ब्रह्मसूत्राणां मुख्यसूत्रत्वेनामुख्यसूत्रोपजीवित्वायोगसमर्थनेनाभ्यधिकाशंकया अत्र निरस्तानामपि समयपादे पुर्नानिरासावसरलाभस्याकरेप्रदर्शनेन च निरस्तम्। त्वयापि ईक्षत्यधिकरणे साङ्ख्यमतनिरासः अत्रैवाधिकरणे तार्किकमतनिरासश्च प्रदर्शितः अतो यत्किञ्चिदेतत्।

यच्च वेदस्यापौरुषेयत्वेन स्वतःप्रामाण्यं प्रतिष्ठापयितुं शब्दयोनित्वादित्यनुक्त्वा शास्त्रयोनित्वादित्युक्तिरिति (त.मा.पृ. ४०) तत्तवैकशास्त्र्यवादित्वविस्मरण विजृम्भितम्। पूर्वमीमांसायामेव वेदापौरुषेयत्वादेः प्रतिष्ठापितत्वात्। तथाचास्मन्मत एव दुरागमनिरासार्थत्वेन शास्त्रपदं सार्थकम्। त्वत्पक्षेऽनर्थकमेव। यदत्रोक्तं शास्त्ररम्भसमर्थनाय शास्त्रपदं प्रयोक्तव्यमिति (त.मा.पृ. ४०) तदपि बालिशम्। शास्त्रशब्दो वेदपर इति त्वयोद्घुष्टत्वेन शास्त्रारम्भो वेदारम्भ एवेति तस्य पूर्व मीमांसायां प्रतिष्ठापितस्यात्रानवसरात्। अवसरप्राप्तस्य ब्रह्ममीमांसारम्भप्रतिष्ठापन स्याकरणाच्च। नहि वेदारम्भणीयत्वं ब्रह्ममीमांसारम्भणीयत्वे हेतुरतिप्रसंगात्।

यच्चोक्तं शास्त्रारम्भे शास्त्रप्रमाणकत्वं हेतुः। न शब्दप्रमाणकत्वमतिप्रसंगात् कारणत्वेपि साध्ये शास्त्रप्रमाणकत्वमेव हेतुरन्यथातिप्रसंगादिति यत्किञ्चिदेतत्। सान्निध्यात् कारणत्वेन साध्येनान्वय इत्यपि न युक्तम्। शास्त्रप्रमाणकत्वेपि ज्योतिष्टोमादेर्जगत्कारणत्वव्यतिरेकेण व्यभिचारादिति (त.मा.पृ.४०) तदुन्मत्तप्रलपितम्। शब्दप्रमाणकत्वस्येव वेदप्रमाणकत्वस्यापि ब्रह्मसूत्रारम्भं प्रत्यहेतुत्वस्योक्तत्वात्। जगत्कारणत्वं नानुमानादिगम्यम् वेदैकप्रमाणत्वात् ज्योतिष्टोमादिवदिति प्रयोगे त्वदुक्तव्यभिचाराप्रसक्तेश्च। कथं तर्हि कारणत्वस्य साध्यत्वोक्तिः। पक्षस्यापि साध्यविशिष्टाकारेण साध्यत्वादित्यवेहि। यद्वा एतदनुमानपर्यवसितब्रह्मकारणत्वरूपसाध्याभिप्रायेण तथोक्तिरित्यदोषः।

यदपि प्रापकवाक्यैरेव छागपशुन्यायसहकृतैः कारणत्वस्य विष्ण्वेकनिष्ठत्वसिद्धेरुपपादितत्वेन तत्र शास्त्रयोनित्वानपेक्षणादिति (त.मा.पृ. ४०) तत्रैवं प्रष्टव्योसि तद्विजिज्ञासस्वेति वाक्येनैव ब्रह्मजिज्ञास्यत्वसिद्धौ तत्र तदर्थकसूत्रस्य किं प्रयोजनमिति। अजिज्ञास्यत्वशंकावारणायेति चेत् कारणत्वस्यापि शिवादिनिष्ठत्वशंकावारणाय शास्त्रयोनित्वापेक्षेति समम्।

यच्चोक्तं शास्त्रारम्भैककार्यत्वं चतुःसूत्र्याःप्रचक्षते अतस्तदाक्षेपकता युक्ता तत्पूर्वपक्षिणः। शास्त्रयोनित्वकर्तृत्वे नान्योन्यान्वयमर्हतः। गुणानां च परार्थत्वादसंबन्धः समत्वतः इति (त.मा.पृ.४०) तदपि मन्दम्। चतुःसूत्रीमात्रस्य शास्त्रारम्भसिध्यर्थत्वे त्वया ईक्षत्यधिकरणे दर्शितस्य सांख्यमतनिरासस्य समयपादे संगतस्येहासंगतत्वप्रसंगात्। त्वद्भाष्ये आत्मकृतेरिति सूत्रे हेतूकृतस्य बहुत्वकरणस्य परिणामादित्युत्तर सूत्रे समर्थनमित्युक्तत्वेन गुणसूत्रयोः परस्परसंबन्धोक्तेश्च। अस्मद्भाष्ये तु द्वयोरपि सूत्रयोः प्रकृतिश्चेति प्रधानसाध्येनान्वयः प्रदर्शितः। किं चेहापि तृतीयचतुर्थसूत्रयोः परस्परसंबन्धः त्वद्भाष्य एवोक्तः। अतो गुणानां च परार्थत्वादिति न्यायपराहतिरावयोः कतरस्येति विचारयतु भवान्।

किं च शास्त्रव्यतिरिक्तमानमात्रनिरस्यत्वेन सौत्रशास्त्रपदप्रयोगसार्थक्यमुक्त्वा प्रत्यक्षादेरतीन्द्रियब्रह्मविषयकत्वस्य शंकितुमप्यशक्यत्वात् अनुमानमात्रमादाय पूर्वपक्षः श्रीमद्भाष्ये प्रदर्शित इति (त.मा.पृ. ४१) त्वयोक्तम्। तथा च प्रत्यक्षादिनिरासौपयिकत्वेन सौत्रशास्त्रपदसार्थक्यमुक्त्वा प्रत्यक्षादेर्ब्रह्मविषयकत्वस्य शंकितुमप्यशक्यत्वेन तन्निरासवैवर्थ्यं च वदतस्तव श्रीमद्भाष्यस्य सूत्रविषयेऽलंकृत्य शिरश्छेदनीतिपटुता साधु दर्शिता त्वया।

यच्चानुमानमात्रनिरासपक्षस्य त्वयापि स्वीकृतत्वात् तवापि शास्त्रपदास्वारस्यं तुल्यमिति (त.मा.पृ. ४१) तदपि तादृशपक्षस्यास्मद्भाष्येऽनुक्तत्वेन चन्द्रिकायां तदुक्तेस्तु प्रौढिवादत्वेनाकिंचित्करमेव।

यदपि कारणत्वमनुमानायोग्यमिति प्रतिज्ञाकल्पनादभ्यर्हितप्रधानान्वयपरित्यागाच्च तव मते गौरवमिति (त.मा.पृ. ४२) तत्तवापि तुल्यम्। यथोक्तलक्षणं ब्रह्म जन्मादिवाक्यं बोधयत्येवेति साध्याध्याहारस्य त्वद्भाष्ये दर्शितत्वात्।

यदपि ब्रह्म यदि कारणत्वासाधारणधर्मकं स्यात्तर्हि आनुमानिकत्वात् शास्त्रैकप्रमाणकं स्यात् ततश्च यतोवेत्यादिवाक्यजातप्रतिपाद्यं च न स्यात् इति शास्त्रमनारम्भणीयं स्यादित्यानुमानिकत्वं ब्रह्मणो निराकर्तुं शास्त्रैकप्रमाणकत्वं वक्तव्यमिति (त.मा.पृ. ४२) तदपि न। अस्य तर्कस्य विपर्ययपर्यवसानेन ब्रह्मणः कारणत्वासाधारणधर्मकत्वाभावस्यैव परमसाध्यत्वलाभात् सिद्धान्तिनाप्यानुमानिकत्वनिरासद्वारा अन्ततः ब्रह्मणः कारणत्वासाधारणधर्मकत्वस्यैव साध्यतया प्रधानविचारकर्तव्यत्वरूपसाध्यान्वयस्य त्वयापि परित्यागात्। परम्परया प्रधानान्वयस्य तवेव मम मतेपि अविशिष्टत्वात्।

यदपि न ब्रह्मा नेशान इत्यादिभिः रुद्रादेः प्रलयसमयवर्तित्वकारणत्वयोरपि निषेधात् तत्परत्वमप्यनुमानस्य न स्यात्। सर्वज्ञत्वादिप्रसिद्धेर्बुद्धादिसाधारण्याः कारणत्वव्यभिचारित्वाच्चेति (त.मा.पृ.४२) तदपि मन्दम् न ब्रह्मा नेशान इत्यादिश्रुतिबाधितत्वस्य सिद्धान्तयुक्तित्वात्। बुद्धादौ सर्वज्ञत्वप्रसिद्धेः शिवकारणत्ववादिनोऽसिद्धेश्च।

एवमेव सिद्धान्तयुक्तिप्रदर्शनेन पूर्वपक्षानुपपत्त्युद्भावनशीलस्य तवोपरितनास्तादृशाः सर्वे आक्षेपाः अकिञ्चित्करा इत्युपेक्ष्यन्ते।

यदपि ऋग्यजुरित्यादिस्कान्दस्मृत्याऽगमबाधो न शंक्यः स्मृतित्वाविशेषात्। न च श्रुत्यनुग्रहात्तत्प्राबल्यय्। श्रुत्यागमयोस्तुल्यतावादिनं पूर्वपक्षिणं प्रति तत्कथनायोगात् उदितहोमश्रुत्यनुगृहीतया अनुदितहोमश्रुतेर्बाधापत्तेश्चेति (त.मा.पृ. ४६) तत्तु चन्द्रिकाप्रकाशे समाहितम्। यथा उदितहोमादौ द्वयोरपि विहितत्वेनैकस्यापि बाधायोगात्तथा कल्पनम्। न चागमप्रामाण्यमेव कल्पकम्। तस्य हेतुदर्शनाच्चेतिजैमिनिसूत्रोक्तन्यायेन विप्रलम्भमूलत्वेनाप्युपपत्तेः। न चैतद्वचनवदागमः श्रुत्यनुगृहीतः। प्रत्युत तद्विरुद्ध इति।

यत्तु पाशुपताद्यपि शास्त्रमेवेति भारतवाक्योदाहरणं (त.मा.पृ.४६) तदप्ययुक्तं शास्त्रशब्दस्य त्वन्मते वेदपरत्वात्, मन्मते त्वदुदाहृतभारतवाक्यस्यापपाठत्वेनाप्रामाण्यात्। यथावस्थितपाठस्य अस्मद्भाष्ये दर्शनात्। नहि पत्युरसामञ्जस्यादिति सूत्रे निन्दितः पाशुपतागमः स्वयं सूत्रकारेण भारते प्रमाणपदवीमारोप्यत इति संभवति।

# अथ समन्वयाधिकरणम्

## ॐ तत्तु समन्वयात् ॐ

कारणत्वस्य शास्त्रैकसमधिगम्यत्वान्नातिव्याप्तिरिरिति पूर्वाधिकरणफलाक्षेपाद्वा पूर्वाधिकरणसिद्धं कारणत्वेन शास्त्रगम्यत्वं विष्णोरन्यस्य वेति विशेषविचाराद्वाऽनन्तर संगतिः।

अत्र शास्त्रयोनित्वं विष्णोरेवान्यस्यापि वेति सन्देहः। रुद्रादेरपि कारणत्वेन शास्त्रैकगम्यत्वमिति पूर्वः पक्षः। शैवाद्यागमाद्वेदव्याख्यानरूपान्मानान्तराविरुद्धात् रुद्रादेरपि कारणत्वे वेदस्य तात्पर्यनिश्चयात्। काव्यव्याख्यानादिव काव्यस्य। व्याख्यानतो विशेषप्रतिपत्तिरित्युक्तेः। न च तस्याप्रामाण्यमुक्तमिति वाच्यम्। प्रमाणभूतव्याख्येयव्याख्यानप्रामाण्ये मानान्तराविरोधे हेत्वन्तरापेक्षाभावात्। इह च मानान्तराविरोधो नैषा तर्केणेत्यादिना सिद्धः। न चैवं पञ्चरात्रादिना विष्णोरपि कारणत्वे वेदतात्पर्यनिश्चयापत्तिः। तथापि देशादिभेदेन पूर्वोक्तदिशा कारणत्वोपपत्त्या विष्णुरेव कर्तेत्यस्यासिद्धेः। उपक्रमादीनां बलाबलनिर्णयायोगेन वेदतात्पर्यानिश्चयकत्वादित्येकः। अन्यस्तु वेदादिशास्त्राद्रुद्रादेः कारणत्वं तावद्भाति। तत्र शास्त्रतात्पर्यं चाबाधादेव सिद्धम्। न च विष्णोः कारणत्वसाधकं रुद्रादेस्तन्निषेधकं वाक्यमेव बाधकम्। वैपरीत्यस्यापि संभवेन द्वयोस्तुल्यबलतया द्वयोरपि कर्तृत्वे च कालादिभेदेन विष्णोः कारणत्वस्य रुद्रादेस्तदभावस्य प्रतिपादनेन तद्वाक्यस्योपपत्तेरिति वेदजन्यापातप्रतीत्यवलम्बी।

यद्वा शैवाद्यागमस्याप्रामाण्योक्त्या न वेदतात्पर्यनिर्णायकत्वमिति न वाच्यम्। वेदेपि रुद्रादेः कारणत्वप्रतीतेरिति आपातप्रतीतिसध्रीचीन आगमावलम्ब्येक एव पूर्वपक्षः।

सिद्धान्तस्तु वेदे परस्परमापाततो विरोधप्रतीतेरेकवाक्यत्वसिद्धये एकस्मिन् तात्पर्येऽवश्यं निश्चेये शैवाद्यागमस्योक्तरीत्याऽप्रामाण्यात् मानान्तराविरुद्धेपि उपक्रमाद्यननुगुणे आपातप्रतीतेऽर्थे तात्पर्यानिर्णायकत्वेन च तद्व्याख्यानत्वायोगात्। आपात प्रतीतेश्चाज्ञानमूलत्वेनानिर्णायकत्वात् व्याख्यानस्यापि उपक्रमादिभिरेव तात्पर्यं निश्चित्य तेन वेदतात्पर्यस्य निश्चेतव्यत्वेनावश्यकैरुपक्रमादिभिरेव मुलग्रन्थेषूक्तरीत्या सुशकबलाबलत्वनिर्णयैर्वेदतात्पर्यस्य निश्चेतव्यत्वेन तैर्विष्णुरेव जगत्कारणत्वेन मुख्यतोऽशेषसच्छास्त्रतात्पर्यविषय इति सिध्यतीति आगमावलम्बी प्रतीत्यवलम्बी चेति द्वावपि पूर्वपक्षावयुक्तौ। अत एवान्त्योप्ययुक्त इति। अतो लक्षणं नातिव्याप्तमिति फलम्।

केचित्तु पूर्वाधिकरणे मानान्तरागोचरत्वलक्षणमपूर्वत्वं प्रतिपादितम्। इह तु फलवत्त्वमुच्यत इति संगतिमाहुः। (त.मा.पृ. ४६) तदसंगतम्। फलसद्भावप्रति पादनेन प्रथमसूत्रोपपादकस्यास्य तदानन्तर्यापातात्। यदत्रोक्तं वस्तुप्रतिपत्त्युत्तर कालीनस्य फलवत्त्वप्रतिपादनस्य लक्षणप्रमाणोपन्यासोत्तरकालीनत्वमेवोचितमिति (त.मा.पृ. ४६) तदप्यसंगतम्। प्रथमसूत्रेपि सिद्धव्युत्पत्तिप्रतिष्ठापनमुखेन ब्रह्म ज्ञानानन्तस्थिरफलप्रत्ययप्रामाण्योपपादनात् तस्य च त्वद्रीत्या लक्षणप्रमाणाभ्यां वस्तु प्रतीत्युत्तरकालीनत्वनियमेन प्रथमसूत्रस्य तृतीयत्वापत्तेः। तादृशनियमानादरेण प्रथमसूत्रस्य प्राथम्योपपादने चतुर्थस्यापि फलवत्त्वप्रतिपादकत्वेन द्वितीयत्वापत्तेः। फलवत्त्वप्रतिपादनेनैकार्थयोः प्रथमचतुर्थसूत्रयोरानन्तर्यस्यैवोचितत्वात्।

यदप्युक्तं प्रतिपादकशब्दगतं प्रतिपाद्यार्थगतं च सामर्थ्यं परीक्षायाः प्रागवगन्तव्यम्। यदि हि शब्दः परिनिष्पन्नवस्तुबोधनासमर्थःस्यात् यदि वार्थःशब्देन प्रतिपादयितुमशक्यः स्यात् न तदा शब्देन तत्परीक्षा स्यात्। अतस्तदुभयं प्रथमतः सूत्रद्वयेन निराकृतम्। प्रत्यक्षवच्छास्त्रं नाबुभुत्सिते प्रवर्तत इति बुभुत्सापेक्षिता। सा च नावगते नाफले चेति तदुभयमनन्तरसूत्रद्वयेन निराक्रियत इति (त.मा.पृ.४६) तदप्यनर्थकम्। एतावतापि प्रथमसूत्रद्वयानन्तरमनन्तरसूत्रद्वयप्रवृत्तौ संगतेरनुक्तेः। नहि परीक्षोप योगिशब्दार्थसामर्थ्यप्रतिष्ठापनानन्तरमेव तृतीयसूत्रे परीक्षा प्रारभ्यते। तत्रापि परीक्षोपयोगिबुभुत्सापेक्षितमनवगतत्वमुपगाद्य परीक्षाकर्तव्यत्वमात्रसाधनात्। किंच कारण वाक्यमात्रविषयकयोः जन्मादिसूत्रशास्त्रयोनिसूत्रयोः प्रथमसूत्रानन्तर्यमसंभवि। नच तयोरपि प्रथमसूत्रस्येव शास्त्रसामान्यविषयकत्वं (त.मा.पृ.४७) निरस्तत्वात्। अस्तु वा तत्। तथापि न प्रथमचतुर्थसूत्रयोरिव साक्षात्। किन्तु कारणत्वमुखेन। अतः साक्षात् सर्वशास्त्रविषयकस्य चतुर्थसूत्रस्यैव तादृशप्रथमसूत्रानन्तर्यमुचितम्।

यदपि यतोवेतिवाक्यं कारणानुवादेन ब्रह्मत्वविधिपरं कारणवाक्यानि सदेवेत्यादीनि। न तानीह विषय इति कारणवाक्यमात्रविषयकत्वकथनं कथमिति न विद्म इति (त.मा.पृ. ४७) तत्रोच्यते। "यतोवा इमानि भूतानि जायन्ते इत्यादिकारण वाक्येन प्रतिपन्नस्य जगज्जन्मादिकारणस्य ब्रह्मणः" इत्यस्ति तावत् त्वदीयं भाष्यम्। "लक्षणवाक्येनानेन कारणत्वमेव लक्षणत्वेनोक्तमिति अस्य कारणवाक्यत्व"मिति च तत्र श्रुतप्रकाशिका। अतः स्वभाष्यटीकाव्यवहारमजानानः कथं चन्द्रिकां विमृशति भवानिति न विद्म इति।

यच्च सिद्धे व्युत्पत्तिसमर्थनं समन्वयाध्यायोपपादकमिति (त.मा.पृ.४७) तन्न। प्रथमसूत्रे जिज्ञासाकर्तव्यत्वमेव समर्थ्यते सूत्राक्षरस्वारस्यात्। न पुनः सिद्धे व्युत्पत्तिः।

श्रुतहानाश्रुतकल्पनाप्रसंगात्। विचारस्य तव मते रागप्राप्तत्वेन तत्र कर्तव्यत्वसमर्थनायोगात् सिद्धव्युत्पत्यभावनिबन्धनतदकर्तव्यत्वपूर्वपक्षस्य सिद्धव्युत्पत्यभावपूर्वपक्ष एव पर्यवसानेन सिद्धान्तस्य सिद्धव्युत्पत्तिसमर्थनमात्रपर्यवसानात् अन्यथा "सायं प्रातर्द्विजातीनां भोजनं श्रुतिचोदित" मिति वचनात् भोजनस्यापि विहितत्वापातात् श्रुतहानस्य दुर्वारत्वात्। सूत्रेण साक्षात्समर्थितार्थस्यानुपपत्तिप्रतिसन्धानेन लभ्यार्थस्यैव आर्थिकार्थत्वेन प्रकृते सिद्धव्युत्पत्तेः साक्षात्समर्थितार्थानुपपत्तिप्रतिसन्धानलब्धत्वाभावेन सौत्रार्थिकार्थत्वस्याप्यभावेन सिद्धव्युत्पत्तिसमर्थनस्याश्रुतत्वानिवारणात्। अस्तु वा तत्समर्थनमपि। तथापि तस्य ब्रह्मकाण्डमात्रप्रामाण्यसिध्यर्थस्य न समन्वयाध्यायमात्रोपपादकत्वं वक्तुमुचितम्। वस्तुतस्तु "कर्मविचारद्वाराक्षेपकव्युदासैकपरायास्तस्या" इति वदता त्वयैवानन्तफलप्रत्ययाप्रामाण्यनिरासमात्रार्थत्वं सिद्धव्युत्पत्तिसमर्थनस्योक्तम्। अतः पूर्वोत्तरविरुद्धं त्वद्भाषितम्।

विशेषणानामविरोधसमर्थनमविरोधविचारोपयोगीति च (त.मा.पृ. ४७) रिक्तं वचः। अविरोधविषयकत्वमात्रेणाविरोधविचारोपयोगित्वासंभवात्। विशेषणत्वावच्छेदेन विरोधस्यालीकत्वेन तच्छङ्कायास्त्वया भ्रममूलत्वोक्त्या च तादृश विरोधसमर्थनस्याविरोधविचारानन्तर्भावाच्च।

आनुमानिकत्वे हि कर्तृत्वोपयुक्तज्ञानशक्त्यादिगुणसिद्धावपि सर्वोपासनासाधारणानन्दाद्यसिध्यापत्तेरिति च (त.मा.पृ. ४७) स्वव्याहत्या पूर्वमेव निरस्तम्।

परमपुरुषार्थरूपत्वं फलाध्यायोपयुक्तमिति तु (त.मा.पृ.४७) तव मनोरथमात्रम्। तस्य सूत्राक्षरैरलाभात्। अध्याहारस्य च कल्पकाभावेनायुक्तत्वात्।

वक्ष्यमाणविशेषविचारहेतुभूतसामान्यविचारोपोद्घलकतया अपूर्वत्वफलवत्वयोर्द्वयोः क्रमेण वक्तव्ययोरत्र विवक्षासंभवे अनिर्धारितसामान्यपरताया अयुक्तत्वादित्यपि (त.मा.पृ. ४८) न युक्तम्। फलवत्त्वस्य प्रथमसूत्रे उक्तत्वेन पुनरिहावक्तव्यत्वात्। विशेषविचारहेतुभूतत्वेन सामान्यविचारस्यैव कर्तव्यत्वाच्च।

समन्वयशब्दस्य भावव्युत्पन्नतया प्रसिद्धस्य करणव्युत्पन्नत्वाश्रयणमतिक्लिष्टम् (त.मा.पृ. ४९) इति तु दुराग्रहविजृम्भितम्। व्याकरणस्योभयत्र साम्यात्। कोशे एकतरस्याप्यदर्शनाच्च। रूढ्यभावेपि पुरुषार्थरूपे ब्रह्मणि सम्यगन्वय इत्यर्थकत्वे तवादरश्चेत् करणार्थकत्वे मम स किं न स्यात्।

यच्चोक्तं एकवचनान्तस्य तस्यापूर्वत्वसहचरितफलवत्त्वपरत्वमेवेति (त.मा.पृ. ४९) तन्न। समुदायैक्याभिप्रायेण वोपक्रमादीनामैकरूप्याभिप्रायेण वा एकवचनोपपत्त्या त्वद्रीतेरेवानुसरणे बीजाभावात्।

यदप्युक्तं तत्पदस्य सन्निहितशास्त्रयोनित्वपरत्वसंभवे व्यवहितब्रह्मपरत्वस्य शास्त्रयोनीति विपरिणामानुषङ्गयोः, समित्यस्यानुषक्तपदस्थसमासैकदेशपदप्रतिपाद्यान्वयित्वस्य, आवृत्त्या पुरस्तादन्वयस्य, वाक्यसमन्वयहेतुश्रुतिलिङ्गाद्यनेकसाधारण्यव्युत्पत्त्यान्वयपदेनाप्रकृतोपक्रमादिमात्राभिधानस्य, प्रत्येकलिङ्गताभञ्जकसमुदायहेतुताबोधकैकवचननिर्देशस्य च कल्पनाया अयुक्तत्वात् इति (त.मा.पृ. ४९) तदपि न। ब्रह्मणः सम्यगन्वयादिति त्वद्व्याख्यानेऽपि ब्रह्मपदाध्याहारापेक्षया तत्पदस्य व्यवहितब्रह्मपरत्वस्यापि ज्यायस्त्वात्। इदंशब्दस्य संनिहितपरामर्शकत्वस्येव तत्पदस्य व्यवहितपरामर्शकत्वस्यैव न्याय्यत्वाच्च। शास्त्रेण सम्यगन्वय इति त्वद्व्याख्यानेऽपि विपरिणामानुषङ्गापरिहाराच्च। सौत्रपदानां बह्वर्थत्ववद्बहुधान्वययोर्भूषणत्वेन संपदस्यावृत्त्यान्वये दोषाभावाच्च। एकदेशान्वयस्य शास्त्रेषु बहुलमुपलम्भेनादोषत्वाच्च। उपक्रमादेरिव श्रुत्यादेरप्यस्माभिरन्वयपदेनाभिधानोक्तेश्च। उपक्रमाद्यैकरूप्यस्यापि तात्पर्यलिङ्गत्वेन तदभिप्रायेणैकवचनोपपत्तेश्च।

यदपि न चोत्तरसूत्रेषु ब्रह्माभिधायकपदाध्याहारप्रसङ्गो दोषः। अशब्दमित्यादेर्भेदव्यपदेशाच्चान्यः नेतरोऽनुपपत्तेरित्यादावन्यादिपदानां च निषेधप्रतियोगिसमर्पकाणां सत्त्वात् जीवत्वे पूर्वपक्षिते तदभावस्यैव साध्यत्वात् तथा चानन्दमयो न जीव इत्युक्त्या जिज्ञास्ये जीवभेदो ब्रह्मत्वं त्वर्थात् सिद्ध्यत्येव। तत्पदानुषङ्गवादिनां तु आनन्दमयादौ पुल्लिङ्गान्तसामानाधिकरण्यदौर्घटचम्। अन्येतरादिपदप्रयोगवैयर्थ्यम्। ईक्षतिकर्मव्यपदेशात् स इत्यादिवैघटचंच दुर्वारमिति (त.मा.पृ. ४७) तन्न। यदि जीवत्वे पूर्वपक्षिते तदभाव एव साध्यस्तर्हि इह सूत्रे कार्ये शास्त्रान्वयपूर्वपक्षे तदभाव एव साध्यः स्यात्। स्वपक्षसाधनपरपक्षनिराकरणाभ्यां तत्वनिर्णयार्थे सूत्रे स्वपक्षसाधनानुक्तौ न्यूनता च स्यात्। ल्युटः टित्करणसामर्थ्येन ल्युडन्तस्य त्रिलिङ्गत्वेऽपि वेदाः प्रमाणमिति यथा तथैवानन्दमयादौ पुंल्लिगान्तसामानाधिकरण्यमुपपद्यते। ईक्षतिकर्मव्यपदेशात्स इत्यादिवैघटचं च चन्द्रिकायामेव परिहृतम्।

यदपि पूर्वपक्षे उपक्रमादीनामनिर्णायकत्वे तत एव व्याख्यानरूपाणामागमानामपि तात्पर्यानिर्णयेऽन्यतात्पर्यानिर्णायकत्वापादनं (त.मा.पृ. ४९) तदसंगतम्। व्याख्यानरूपाणामागमानां व्याख्येयवदस्पष्टार्थकत्वाभावेनोपक्रमाद्यनपेक्षत्वमिति पूर्वपक्ष्याशयात्।

यच्चोक्तमेतेन व्याख्यानतो विशेषप्रतिपत्तिरित्यपि गलहस्तिता। साधारण्यानुपपादनाच्च। मानान्तराविरुद्धादिति विशेषणमपि व्याहतम्। परस्परपरिपन्थित्वादागमानामिति (त.मा.पृ. ४९) तदपि पूर्वपक्षिमतेन व्याख्येयसाधारण्यस्य मानान्तराविरोधित्वस्य च सत्वादयुक्तम्।

यच्च शिवैकतात्पर्यकत्वं त्वतिव्याप्तिवादिनो नाभिमतमिति (त.मा.पृ. ५०) तत्तु लक्ष्यवृत्तित्वस्यापि अतिव्याप्तिशरीरे प्रवेशोऽस्तीति भ्रममूलकत्वादनादरणीयम्। अतिव्याप्तेरलक्ष्यवृत्तित्वमात्ररूपत्वं पूर्वमेवोक्तम्।

यच्च पाञ्चरात्रादिभिर्विष्ण्वेकतात्पर्यकत्वस्यापि निश्चयसंभवाच्चेति (त.मा.पृ. ५०) तत्तूपहास्यम्। अस्य सिद्धान्तयुक्तित्वात्।

यदप्यौत्सर्गिके नियमे व्यभिचारस्यादोषतया श्रुतिलिङ्गादेरिवोपक्रमादेरपि निर्णायकत्वाविरोधादिति (त.मा.पृ.५०) तदपि मन्दम् सिद्धान्तरीत्या तत्र व्यभिचारा भावेन तदंगीकारायोगात्। पूर्वपक्षिणा त्वज्ञानेनैव तदुद्भावनम्।

उपसंहारस्य व्याख्यानरूपत्वासंप्रतिपत्तिकथनं तु (त.मा.पृ. ५०) स्वव्याहतम्। त्वयैवोत्तरत्र (त.मा.पृ. ५८) वस्तुतस्त्वित्यादिनोपक्रमोपसंहारयोर्व्याख्यानव्याख्येयं भावांगीकारात्।

यदपि व्याख्येयविरोधिनो व्याख्यानस्यैवानुपादेयत्वाच्च। संदिग्धे हि व्याख्येयं व्याख्याननिर्णेयं भवति। तथा यत्र व्याख्येयं लोकतोऽप्रतीतार्थमर्थान्तरे प्रसिद्धं वा तत्रापि व्याख्यानतः प्रतिपत्तिः। वेदोपक्रमाधिकरणे चोपक्रमगतं वेदपदमुपसंहार-गतमृगादिपदं च न संदिग्धार्थमप्रतीतार्थकं वा। किं तूभयमपि प्रसिद्धनिर्णीतार्थकम् इति (त.मा.पृ. ५०) तदपि तुच्छम्। व्याख्येयविरोधिनो व्याख्यानस्यैवानुपादे-यत्वे उग्रं वच इत्यादावशनायापिपासे इति व्याख्यानस्यानुपादेयताप्रसंगात्। लोक-तोऽप्रतीतार्थत्वादिहेतुना व्याख्यानतः प्रतिपत्तिरिति चेत् तत एवोपक्रमोपसंहारयोर्व्या-ख्यानव्याख्येयभाव इति विभावय। वेदोपक्रमाधिकरणे चास्मद्रीत्या नोपक्रमोप संहारयोर्व्याख्यानव्याख्येयभावेन निर्णयः। किन्त्वभ्यासेनोपक्रमबाधात्।

यदत्र वेदो वा प्रायदर्शनादिति सूत्रविरोधोद्भावनं (त.मा.पृ.५०) तदप्यकिंचित्क रम्। तत्सूत्रभाष्यवार्तिकादेः उपक्रमोपसंहारावभ्यासोऽपूर्वता फलमित्यादि प्रमाण-विरुद्धत्वेनानुपादेयत्वात्। सूत्रस्यास्माभिर्यथावद्व्याख्यानाच्च।

यदपि ऋगादिशब्दमुख्यार्थबाधादपि संकोचस्यैव ज्यायस्त्वादिति (त.मा.पृ.५१) तदप्यापाततः। संकोचे लक्षणायां च विलम्बेन बोधस्य साम्येन तारतम्यायोगात्।

यच्चोक्तम् उपसंहारस्य व्याख्यानरूपत्वानियमात् व्याख्यानस्योपसंहारत्वानियमाच्चापुङ्गवमानयति। देवनाक्षमानय। वृद्धिरादैच्। सिचि वृद्धिः। यतो वा इमानि भूतानि जायन्ते। तद्ब्रह्मेत्यादौ हि पुमादिपदानामुपक्रमस्थानामपि व्याख्यानरूपता दृष्टा इति (त.मा.पृ. ५१) तत्तु न विचारसहम्। त्वयैवोत्तरत्र (त.मा.पृ. ५८)

वस्तुतस्त्वित्यादिनोक्तदिशोपक्रमोपसंहारयोरेकार्थत्वायोपसंहारस्य व्याख्यानरूपत्वावश्यकत्वात्। उपसंहारस्य सर्वत्रोपक्रमस्थपदाघटितत्वेन पर्यायपदोक्तेर्व्याख्यानरूपत्वप्राप्तेश्च। वृद्धिरादैच् इत्यारभ्य सिचि वृद्धिरितिपर्यन्तस्यैकप्रकरणत्वाभावेनोपक्रमोपसंहारत्वानङ्गीकाराच्च। नहि वृद्धिरादैच् सिचिवृद्धिरिति सूत्रयोर्मध्ये भिन्नभिन्नविषयाणां सत्वेऽप्येकप्रकरणत्वमिति संभवति। न वा प्रकरणादिरुपक्रमः प्रकरणान्त उपसंहार इत्युक्तलक्षणं प्रकृते संभवति। एतेन यतोवेत्यादिवाक्योदाहरणमपि निरस्तम्। यतोवेत्यारभ्य तद्ब्रह्मेतिपर्यन्तस्यैकवाक्यत्वेनैकार्थकबहुवाक्यत्व रूपप्रकरणत्वासंभवात्। उपक्रमोपसंहारलक्षणाननुगमादिति। यत्तूपसंहारविजये वृद्धिरादैजित्याद्युदाहरणं तत्तुष्यतुन्यायेन।

यदपि किमुपस्थितिप्राथम्यं व्याख्येयतानियामकमभिमतं पाठप्राथम्यं वा आद्ये गवाक्षब्रह्मस्वर्गपदादेरिव चरमश्रुतस्याप्युपसंहारस्य प्रथमोपस्थितिसंभवेन व्याख्येयताप्रसंगः। द्वितीये तु गवादावपि तदप्रसङ्ग इति (त.मा.पृ. ५१) तदयुक्तम्। व्याख्येयोपस्थितिमन्तरेण व्याख्यानासंभवात् चरमोपस्थितस्योपसंहारस्यैव व्याख्यानरूपताकल्पनमित्यस्यौत्सर्गिकनियमत्वाङ्गीकारेण तत्र व्यभिचारोद्भावनस्यायुक्तत्वात्। वस्तुतस्तु उपस्थितिप्राथम्यपाठप्राथम्यान्यतरस्य व्याख्येयतानियामकत्वाभिप्रायेणैतद्ग्रन्थप्रवृत्तिः। यदीयं व्याख्येयं तदीयमेव चेद् व्याख्यानं तत्र ग्रन्थकारस्य वक्ष्यमाणमपि पूर्वमेव बुद्धिस्थमिति उपस्थितिप्राथम्यमस्ति। अन्यदीयं व्याख्यानं चेत् पाठप्राथम्यमस्तीति अन्यतरस्य प्राथम्यं नियामकं संभवत्येव। तथाचोपसंहार स्यैव व्याख्यानरूपतेतिनियम औत्सर्गिकः। क्वचिदुपसंहारस्य सिचिवृद्धिरित्यादेरपि व्याख्येयतास्ति। व्याख्येयतानियमकं तूपस्थितिप्राथम्यपाठप्राथम्यान्यतरदेव। तस्योप संहारेऽपि सत्वे तस्यापि व्याख्येयत्वं न विरुध्यत इति निष्कर्षः।

एतेन न प्रथमयज्ञे प्रवृञ्ज्यात् इत्यादि प्रथमोपस्थितप्राबल्यानुसरणोदाहरणमपि (त.मा.पृ. ५२) प्रत्युक्तम्। एकस्य वाक्यस्य प्रकरणत्वाभावेन तद्घटकपूर्वोत्तर पदयोरुपक्रमोपसंहारलक्षणाननुगमस्योक्तत्वेन तत्रोक्तनियमव्यभिचारप्रदर्शनासंगतेः। पूर्वोत्तरपदयोर्मध्ये पूर्वपदस्य निरवकाशत्वे पूर्वपदानुसारेणोत्तरपदस्य उत्तरपदस्य निरवकाशत्वे च उत्तरपदानुसारेण पूर्वपदस्य बाधोऽङ्गीकर्तव्यः। उभयोर्निरवकाशत्वे तु अनुपसंजातविरोधित्वन्यायेन पूर्वपदानुसारेणोत्तरपदस्य बाधः। न प्रथमयज्ञ इत्यत्रोभयोः निरवकाशत्वेन प्रथमानुसारेणोत्तरपदस्य लक्षणा स्वीकृता। अनेन न्यायेन निरवकाशव्याख्यानरूपोपसंहारानुरोधेन व्याख्येयस्योपक्रमस्य बाधाङ्गीकारे न कोपि विरोधः।

एतेन सामान्यरूपं सन्दिग्धं च विशेषरूपेणासन्दिग्धेन प्रथमेन चरमेण वा व्याख्येय मिति नियमस्य प्रथमयज्ञशब्दयोरतद्रूपत्वेन प्रत्यवस्थानमपि (त.मा.पृ. ५२) गलह स्तितम्। प्रथमयज्ञशब्दयोरतद्रूपत्वे नियमान्तरेण व्यवस्थासंभवात्। यत्र तद्रूपत्व संभवः तत्रैवोक्तनियमोस्त्विति।

यत्तु यथा जामित्वकीर्तनादुपक्रम एव मध्ये किञ्चिद्विधित्सितमित्यवगमात् अस्पष्टविधिकमप्यन्तरालवाक्यमेवोपांशुयाजविधायकं न तु स्पष्टविधिकान्यपि विष्णवा दिवाक्यानीत्युच्यते तथोपक्रम एव वेदसंकीर्तनाद्वेदसंबन्धि किञ्चिद्विधित्सितमित्यवग मात् तदविरोधाय चरमश्रुतानामृगादिपदानामेव व्याख्येयतौचित्यादिति (त.मा.पृ. ५२) तन्मन्दम्। यतो हि जामित्वकीर्तनं नोपक्रममात्रे। अपि तूपसंहारेऽपि। अजामित्वायेत्यन्तेऽपि श्रवणात्। अतो वेदोपक्रमाधिकरणेऽत्रत्यन्यायानवसरः। उपसंहारस्थनिरवकाशवाक्येन उपक्रमविरुद्धाभिधाने तूपक्रमस्यैव बाधः यथा इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति प्रबलोपसंहारेण श्रद्धां जुह्वतीति उपक्रमस्यैव बाधः।

यदपि इष्टेर्दाननिमित्तकत्वोपजीविनः कर्माङ्गत्वस्य तदुपजीव्यत्वस्येतरेतरा श्रयापादनं (त.मा.पृ. ५२) तदपि मन्दम्। इष्टेर्दाननिमित्तकत्वोपजीवित्वस्य कर्मा ङ्गत्वेऽभावात्। दातुरिष्टिरित्यभिमानेन प्रथमाधिकरणारम्भात्। न चात्र दातु रिष्टिरिति स्थिते इदमारभ्यते इति भाष्योक्तिविरोधः। भाष्यस्यापि आभिमानिकी दातुरिष्टिरित्येवाशयात्। वक्ष्यमाणाधिकरणन्यायेन दातुरिष्टिरिति स्थिते इदं प्रथमाधिकरणमारभ्यत इति तदाशयवर्णने किमियं वारुणेष्टिर्मित्रादिभ्यः स्नेहेन कृतेऽश्वदाने निमित्ते पुरुषार्थतया विधीयते उत वैदिके ज्योतिष्टोमादिकर्माङ्गभूते अश्वदाने निमिते क्रत्वर्थतया विधीयते इति प्रथमाधिकरणस्थसंशयानुपपत्तेः। उत्तराधिकरणे वैदिकेऽश्वदाने निमित्ते क्रत्वर्थतया वारुणेष्टिरिति उपक्रम प्राबल्येन निर्णीते सति तं निर्णयमुपजीव्य प्रवर्तमाने पूर्वाधिकरणे दर्शितसंशया योगस्य स्पष्टत्वात्।

यदुक्तं यत्र विलक्षणसामग्रीवशात् परस्पराप्रतिबद्धस्य प्रमाजनकत्वं तत्रापच्छे दन्यायः इति (त.मा.पृ. ५३) तत्रेदं प्रष्टव्यम्। परस्पराप्रतिवद्धेति कोर्थः? यदि यथाश्रुत एव तदा त्वदुक्तरीत्या ऋक्पदस्य स्तुत्यन्वयप्रतिरुद्धशक्तिकत्वेऽपि वेदपदस्य प्रतिरुद्धशक्तिकत्वाभावात् अपच्छेदन्यायविरोधध्रौव्यात्। यद्यपरस्परसंभूतमिति गीतायामिव द्वयोर्मध्ये एकस्यान्येनाप्रतिबद्धत्वं तदा अपच्छेदनये पूर्वं प्रति परस्य बाध कत्वात् यद्बाधकं तत् प्रतिरोधकमेवेति नियमेन एकस्यान्येन प्रतिरुद्धत्वरूपपरस्पर प्रतिबद्धत्वसत्वात् तत्रापच्छेदन्यायावसरो न स्यात्।

यच्चोक्तमश्वप्रतिग्रहेष्ट्यधिकरणेऽपि दोषनिर्हरणार्थत्वादिष्टेरिति (त.मा.पृ.५३) तदुपहास्यम्। शास्त्रविहिते दोषप्रसक्त्यभावात् दोषनिर्हरणवाक्यस्यार्थवादत्वेन निर्णीतत्वात्।

यदप्युक्तं मैत्रायणीयशाखाया दात्रुपक्रमत्वाभावेन साधारण्येऽप्यनारभ्याधीततैत्तिरीयशाखावाक्यस्य दात्रुपक्रमतया तत्रोक्तगतिं विनाऽसिद्धेः। उपक्रमाधिकरणन्यायाधिकशंकाव्यावर्तनमात्रफलकत्वाभिधायिबहुतरग्रन्थविरोधाच्चेति (त.मा.पृ.५४) तदपि न युक्तम्। दात्रुपक्रमादृते कर्माङ्गत्ववशादेव दातुरिष्टिरिति तन्त्रसारविरोधात्। शास्त्रदीपिकायामुपक्रमाधिकरणन्यायाधिकशंकाव्यावर्तनफलकत्वं विहायाथवेति कल्पान्तरानुसरणदर्शनेन बहुतरग्रन्थविरोधस्याभावाच्च।

यच्चोक्तमक्ता इत्युपक्रमेऽञ्जनसाधनद्रव्यान्तराप्रतीतेः। न चाक्षेपात्तत्प्रतीतिः। अनुमानपर्यायादाक्षेपात् प्रागेव प्रत्यक्षघृतश्रुतिप्रवृत्तेरिति (त.मा.पृ. ५४) तदप्यापातरमणीयम्। तेजो वै घृतमितिवाक्येन घृतेनाञ्जनं कर्तव्यमित्यप्रतीतेः तादृशविधिकल्पनाप्रयुक्तविलम्बसत्वेनानुमानपर्यायाक्षेपात् प्राक् घृतश्रुत्यप्रवृत्तेः।

यदप्यर्थवादाप्रतिसन्धानकालीनाव्यवस्थितार्थत्वस्यैव सन्दिग्धपदार्थत्वात्। न चैवं मुख्यार्थत्यागप्रसंगः। वाक्यस्य संशयाजनकतया मुख्यार्थस्य सर्वमतेऽप्यसंभवात्। विधेरनुष्ठापकत्वाय येन केनचिदञ्जनं कर्तव्यमित्येव तदर्थस्यावश्यकत्वादिति (त.मा.पृ. ५४) तदपि न। वाक्यस्य संशयाजनकत्वे विप्रतिपत्तेरपि तथात्वापातात्। सूत्रगतसन्दिग्धपदस्यामुख्यार्थत्वापत्तेश्च।

यदपि विप्रतिपन्ने चार्थेऽयं प्रवर्तते नाविप्रतिपन्ने। अत एवापौरुषेयसर्वपुरुषसाधारणविधिवाक्यावगते कस्यापि विप्रतिपत्त्यभावात् तत्र पुनः श्रवणं कर्मभेदकमित्युच्यते इति (त.मा.पृ. ५४) तदज्ञानविजृम्भितम्। न च पुनरावर्तते न च पुनरावर्तत इति अपौरुषेयवाक्यपुनःश्रवणस्य तात्पर्यनिश्चायकत्वदर्शनात्। न चापौरुषेयेष्वपि विधिवाक्यानामेव पुनः श्रवणं कर्मभेदकमुक्तमिति वाच्यम् सोन्वेष्टव्यः स विजिज्ञासितव्य इत्यादौ तथा ऋतं च स्वाध्यायप्रवचने च सत्यं च स्वाध्यायप्रवचने चेत्यादौ विधिपदाध्याहारयुक्ते कर्मभेदकत्वादर्शनात्।

यच्चोक्तमेकप्रकारासकृदुक्तिरभ्यासस्तात्पर्यलिङ्गमिति केषांचिन कल्पना निरस्ता समिधो यजति तनूनपातं यजति इत्यादौ कर्मभेदानुपपत्तेः यजतिप्रकारैक्यात्। उपपदादिप्रकारभेदादनेकप्रकारत्वे च आनन्दमयोभ्यासादित्यत्रापि ब्रह्मशब्दाभ्यासो न सिध्येत् असत्वादिप्रकारभेदादिति (त.मा.पृ. ५४) तदपि न। अभ्यासो मुख्योऽमुख्य

श्चेति द्विविधः। एका एकप्रकारासकृदुक्तिः मुख्या। अपरा असकृदुक्तिमात्ररूपा अमुख्या। समिधो यजतीत्यादौ कर्मभेदः पञ्च प्रयाजा इज्यन्त इति पञ्चत्वसंख्यादिना। नाभ्यासात्। अन्यथा अग्निहोत्रं जुहोति दध्ना जुहोति इत्यत्र जुहोति पदाभ्यासेन कर्मभेदः स्यात्। आनन्दमयोऽभ्यासादित्यत्रामुख्योऽभ्यासो विवक्षितः। आकरेषु तथोपपादनात्।

यदप्युक्तं शारीरत्वश्रवणावगतजीवत्वनिरासे आनन्दाभ्यासस्यैव हेतुत्वात् ब्रह्मशब्दाभ्यासस्य तपसा ब्रह्मविजिज्ञासस्व तपो ब्रह्मेत्यादावपि सत्वेनातिप्रसक्तत्वात् अन्नमयादौ तदभावेनाव्याप्तेश्चेति (त.मा.पृ. ५५) तदपि आनन्दमयाधिकरणे ब्रह्म शब्दाभ्यासस्य हेतुत्वसमर्थनेन आनन्दाभ्यासस्य तन्निरासेन च निरसिष्यते।

यदपि परब्रह्मासाधारणलिङ्गबलात् जीवश्रुतेरपि परमात्मपरत्वे सति तदभ्या सस्यापि तत्तात्पर्यनिश्चायकतया तत्रापूर्वताया अनुपयुक्तत्वात्। ननु कारणत्वं जीवगतमेवेति पूर्वपक्षे तस्य ब्रह्मासाधारणलिङ्गत्वमेव नेति न जीवश्रुतिभङ्ग इति चेत् तर्हि अव्यक्तादिसकलजगत्कर्तृत्वं तद्गतमप्यपूर्वमेवेति नापूर्वतया तत्परिहार इति (त.मा.पृ. ५५) तदपि न। अव्यक्तादिसकलजगत्कर्तृत्वस्य अपूर्वत्वेऽपि जीवशब्दस्या पूर्वार्थित्वाभावात् ब्रह्मपक्षे धर्मिधर्मोभयांशेप्यपूर्वतालाभात् परब्रह्मपरत्वनिर्णयात् अभ्यासादपूर्वतायाः प्राबल्ये अनुपपत्त्यभावात्।

यदप्युक्तम् अप्राप्तेऽपि निष्फले तात्पर्यादर्शनादित्यपि न। विश्वजिता यजेतेत्यादौ विधेयस्य फलादर्शनेऽपि तद्बलेन फलकल्पनात्। सर्वस्य फलार्थत्वादित्यपि न युक्तं नित्यनैमित्तिकमात्रविलोपप्रसंगात् क्रत्वर्थपुरुषार्थविभागाभावप्रसंगाच्चेति (त.मा.पृ. ५५) तदप्ययुक्तम्। अर्थद्वयोपेतविधेयपददर्शनेन कतरोऽर्थो विधेय इति जिज्ञासायां अर्थद्वयस्याप्यपूर्वत्वेऽपि सफल एव विधेयत्वकल्पनात् फलादर्शने तदकल्पनात्। विश्व जिच्छब्दस्य तु एकार्थत्वेन विश्वजिद्यागस्यैव विधेयत्वनिर्णयेन फलकल्पनस्य सुशकत्वात्। नित्यनैमित्तिककर्मणां फलशून्यत्वकथनं तु प्रमाणविरुद्धम्। तत्कर्म हरितोषं यदिति प्रमाणेन शास्त्रविहितकर्मत्वावच्छेदेन हरिप्रीतिरूपफलसत्वात्। क्रत्वर्थस्यापि क्रतुफलेन फलवत्त्वात् क्रत्वर्थपुरुषार्थविभागाभावप्रसंजनायोगात्।

यदपि 'तद्धैक आहुः, असदेवेदमग्र आसीत्' इत्यनूद्य 'कथमसतस्सज्जायेत' इत्युपपत्यभावेनैव तत्र तात्पर्याभावनिश्चयेन तस्य सफलत्वबलवत्वासाधकत्वात् इति (त.मा.पृ. ५५) तदपि न। असद्वा इति वाक्यस्येव सद्विद्यादिवाक्यस्यापि उपपत्ति विरुद्धत्वात्। तथाहि-किं सत् सशरीरम्, उत अशरीरम्। नाद्यः प्रलयवृत्तित्वायोगात्।

न द्वितीयः कर्तृत्वायोगात् इति। एतदुपपत्तिविरोधस्य सद्विद्यावाक्यसमिपे अनुक्तत्वेपि तन्सत्वं नापलापार्हम्। अतो द्वयोरपि उपपत्तिविरोधसाम्ये सफलत्वादेव सद्विद्यावाक्यस्य स्वार्थपरत्वं वक्तव्यम्। न च उपपत्तिविरोधेऽपि सफलत्वेन तात्पर्यनिर्णये उपपत्यपेक्षया फलवत्वस्य प्राबल्यं स्यादिति वाच्यम्। परस्परविरुद्ध भेदाभेदज्ञानयोः द्वयोरपि फलवत्वप्रतिपादनेऽपि यत्र उपपत्तिविरोधाभावस्तत्रैव तात्पर्यकल्पनात्।

एतेन श्रुत्यन्तरविरुद्धेर्थे न श्रुतेस्तात्पर्यमिति न्यायेन द्वैतवाक्यविरोधेन अद्वैत वाक्यानां प्रत्यक्षवाधितानां शरीरशरीरिभावोपादानोपादेयभावादिभिः घटकश्रुत्यवगतैरन्यथासिद्धानां च जीवब्रह्माभेदतात्पर्यायोगात् सफलत्वं न निर्णायकमिति (त.मा.पृ. ५६) निरस्तम्। द्वैतवाक्येऽपि अद्वैत्युक्तोपपत्तिविरोधोपस्थितिसत्वे द्वैताद्वैतवाक्ययोरुभयोरपि उपपत्तिविरोधसाम्यात्। तयोर्वाक्ययोः परस्परविरोध साम्याच्च। शरीरशरीरिभावेन अद्वैतवाक्यस्येव औपाधिकभेदेन द्वैतवाक्यस्यापि अन्यथासिद्धेः साम्याच्च। स्वात्मनि ब्रह्मैक्यस्य प्रत्यक्षवाधितत्वेऽपि परात्मनि ब्रह्मैक्य बोधकस्य अद्वैतवाक्यस्य प्रत्यक्षविरोधासम्भवाच्च। द्वैतवाक्यस्य सफलत्वेनैव स्वार्थे तात्पर्यस्य वक्तव्यत्वेन अपूर्वतायाः सफलत्वस्य प्राबल्यनिर्णयात्।

यदप्युक्तं अङ्गवाक्यानां अपूर्वतायुक्तानामपि फलवत्प्रधानवाक्यानुसरणात् फल वत्वप्राबल्यं इत्यपि न चतुरस्रम्। फलवत्सन्निधावफलं तदङ्गमिति न्यायेन प्राधान्य मात्रगमकस्य तस्यापूर्वत्वात्प्राबल्यासिद्धेः। न ह्यपूर्वता प्राधान्यव्याप्या। येन फलवत्ता तद्बाधनेन ततो बलवती स्यात्। सा हि विधेयताव्याप्या। सा चेदानीमपि नावैतीति (त.मा.पृ. ५६) तदपि न चतुरस्रम्। अन्यार्थोपयुक्तार्थतात्पर्यकत्वं अङ्गवाक्यस्य अप्राधान्यं नाम। अन्यार्थानुपयुक्तार्थतात्पर्यत्वं च अङ्गिवाक्यस्य प्राधान्यम्। अपूर्वतापि अन्यार्थानुपयुक्तार्थतात्पर्यकत्वमेवोत्सर्गतो ज्ञापयति। अपूर्वतायुक्तेपि वाक्ये यदि सफलत्वं नास्ति फलवाक्यसन्निधिस्तु विद्यते तत्र एतादृशबाधकेन अन्यार्थोपयुक्तार्थतात्पर्यकत्वं सेत्स्यति। तथा च अपूर्वतायाः प्राधान्यव्याप्यत्वेन अपूर्वत्वात्फलवत्वस्य प्राबल्यसिद्धिरिति।

यदपि सति सम्भवे एकस्य अधिकारोत्पत्तिविध्युभयरूपताया अन्याय्यतया सौर्यादिवाक्ये अगत्या तत्स्वीकारेपि इह रूपालाभेन अग्निहोत्रं जुहोति इत्यादेः कर्मान्तर विधिपरत्वासम्भवेन तस्योत्पत्तिपरत्वम् अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादेरधिकारपरत्वं चाङ्गीकृतम् इति (त.मा.पृ. ५६) तदपि न। कर्मान्तरविधिपरत्वाभावः किं रूपाभावेनोत फलाभावेनेत्यत्र विनिगमनाविरहात् फलाभावस्यापि

प्रयोजकत्वसिद्धेः। नच फलवत्वस्य कुत्रापि तात्पर्यनिश्चायकत्वाक्लृप्तेः न विनिगमनाविरहः इति वाच्यम्। फलवत्सन्निधावफलं तदङ्गं इति न्यायेन फलवत्वस्य तात्पर्यनिश्चायकत्वक्लृप्तेः। वस्तुतस्तु विश्वजितायजेतेति वाक्यस्य यागविशेषे तात्पर्यनिर्णयेन अश्रुतमपि फलं स्वर्गरूपं यथानुमीयते तथा अग्निहोत्रं जुहोतीति वाक्यस्य कर्मान्तरे तात्पर्यनिर्णये अश्रुतमपि किंचिद्रूपं कल्प्येत। नहि रूपं न श्रुतमित्यें-तावता कर्मान्तरं नेति वक्तुं युक्तम्। प्रकृते तु अपूर्वत्वसत्वेऽपि फलाभावेन कर्मान्तिरे तात्पर्यनिर्णय एव न शक्यः। न च विश्वजिद्यागवत् फलमेव कल्प्यम्। तत्रैवात्र कर्मान्तिरे तात्पर्यनिर्णयाभावात्। न चान्योन्याश्रयः। तात्पर्यसंशयस्थले एव लिङ्गान्वेषणात्। प्रकृते संशयस्य सत्वात्। यदपि यत्र अङ्गप्रधानयोरुभयोरपि फलश्रवणं तत्र कथं प्राबल्यदौर्बल्यनिर्णयः। अङ्गेषु फलश्रुतिरर्थवादः इति न्यायाश्रयणेनेति चेत् सत्यं। अङ्गत्वनिश्चयो वा तत्र कुतः। उपायान्तरेण प्रकरणादिना इति चेत् तर्हि तत एव प्रधानवाक्यानुसरणमपि सिद्धमिति कुतः फलवत्ताप्राबल्यमिति इति (त.मा.पृ. ५६) तदपि मन्दम्। यत्र अङ्गप्रधानयोरुभयोरपि फलाश्रवणं तत्र फलवत्सन्निधावफलं तदङ्गमिति न्यायेनैव प्रधानवाक्यानुसरणं सिद्ध्यति लाघवात्। नतु प्रकरणादिना उपायान्तरेण गौरवात्। तथाच पूर्वोक्तरीत्या अपूर्वतायाः फलवत्वस्य प्राबल्य सिद्धिरिति।

यदपि बभुक्षुभिः फलार्थं कर्मानुष्ठानदर्शनात् मुमुक्षुभिः तदननुष्ठानस्य फला-कांक्षाविरहेण अन्यथासिद्धत्वात्। ज्ञानार्थं तदनुष्ठानस्य ब्राह्मणा विविदिषन्ति यज्ञेन दानेनेति ज्ञानाङ्गताबोधक विध्यायत्ततया अर्थवादायत्तत्वाभावाच्चेति (त.मा.पृ ५६) तदपि आपाततः। मुमुक्षूणां फलाकांक्षाविरहस्यापि निन्दार्थवादायत्तत्वात्। सौभर्यादिभिस्तु ब्रह्मापरोक्षिभिः निन्दार्थवादबोधितानर्थप्राप्तिनिवारणशक्तत्वादेव फलार्थमनुष्ठानम्। किंच ज्ञानार्थं कर्मानुष्ठानमपि अर्थवादायत्तमेव। विविदिषन्ति यज्ञेनेत्यादेः लिङाद्यघटितत्वेन कर्मणा ज्ञानमातनोतीत्यादेरिव अर्थवादत्वात्।

यदप्युक्तं फलवत्वादर्थवादप्राबल्यं हेत्वनुपन्यासात् उपपद्यते इति आख्यात-श्रवणेन तद्विधित्वस्य तदश्रवणेन अन्येषां अविधित्वस्य च निश्चयेन तत्र अर्थवादस्य अनुपष्टम्भकत्वात्। यावदुक्थेनोपाप्नोति तावदुपाप्नोति इत्याद्यर्थवादसत्वेऽपि विद्वद्वाक्यद्वयस्य विधायकत्वादर्शनेन अर्थवादस्य विध्युन्नायकत्वनैयत्यासिद्धेश्चेति (त.मा.पृ. ५६) तदपि मन्दम्। प्राशस्त्यज्ञानकारणत्वरूपस्य अर्तवादप्राबल्यहेतोः प्रसिद्धत्वेन तदनुपन्यासात्। प्राशस्त्यं च अकरणे प्रत्यवायाद्यन्यतमवत्वम्। उपपद्यते इत्याख्यातश्रवणमात्रेण तद्विधित्वनिश्चये विधिर्वा स्यादपूर्वत्वात् इत्यत्र स्मृतिप्राप्त

त्वेनानुवादत्वशंका क्रत्वर्थतया प्राप्त्यभावेन विधित्वसिद्धान्तश्च न स्याताम्। यदि तत्र आख्यातश्रवणेपि स्मृतिप्राप्तत्वं शंकाबीजं भवत्येवेति तर्हि अत्र मौकर्यरूपफला भावेन अविधित्वशंकायां अर्थवादबोधितप्राशस्त्यबोधेन विधित्वनिर्धारः कुतो न स्यात्। अर्थवादस्य विध्युन्नायकत्वं च औत्सर्गिकम्। अतः तत्र विद्वद्वाक्यस्थले व्यभिचारोद्भावनमकिंचित्करमेव।

यदपि अनुपपन्नेप्याप्तमत्रपोत्खननादौ अर्थवाददर्शनेन उपपत्तेस्सर्वमूलत्वासिद्धेरिति (त.मा.पृ. ५७) तदनेन निरस्तम्। विवादपदस्य वाक्यस्य उपपन्नानुप पन्नार्थद्वयप्रतीतौ उपपन्नार्थ एव तात्पर्यमुपक्रमादीनि निश्चाययन्ति। अतः उपपत्तेः उपक्रमादिनिष्ठतात्पर्यनिर्णायकत्वे प्रयोजकत्वाभिप्रायेण उपपत्तेस्सर्वमुलत्वाभिधानम्। अस्य आत्मवपोत्खननवाक्ये व्यभिचारप्रसक्तिरेव नास्ति इति।

यदप्युक्तं भेदश्रुतीनामपि सार्थवादत्वात् प्रत्यक्षादिविरोधेन यजमानप्रस्तराभेदस्येव जीवे ब्रह्माभेदस्यापि श्रुतितात्पर्यविषयत्वायोगेनैव तत्र तात्पर्यलिङ्गान्तराणाम गमकतया तत्रोपपत्तिप्राबल्यकथनस्य अयुक्तत्वाच्च। अभेदेप्युपपत्यन्तराणां परै रुपवर्णनाच्चेति (त.मा.पृ.५७) तदपि न। भिन्नोऽचिन्त्यः इति कौशिकश्रुतेः उपपत्ति सहितत्वेपि अर्थवादसहितत्वाभावात् प्रकरणान्तरेषु भेदश्रुतेः सार्थवादत्वेपि तेषामत्रानुदाहरणात्। परमात्मनिष्ठभेदप्रतिपादिकायाः अस्याः कौशिकश्रुतेः परमात्मनिष्ठैक्यश्रुतिबाधकत्वेन तत्र परमात्मनिष्ठैक्यविषयेणैव प्रत्यक्षेण विरोधस्य त्वया उद्भाव्यत्वात्। अभेदे परैरुपवर्णितानां उपपत्तीनां आभासत्वज्ञानदशायां सोपपत्तिक कौशिकश्रुतेः तात्पर्यनिश्चायकत्वेनोदाहरणाच्च।

एतेन उपक्रमादेरुत्तरोत्तरप्राबल्यकथनमप्रामाणिकमित्यपि (त.मा.पृ. ५७) निरस्तम्। उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् इत्यादिप्रमाणसिद्धोपक्रमादीनां ब्रह्मतर्कशास्त्रे उत्तरोत्तरप्राबल्यस्योक्तत्वात्। तदनुसारेण आचार्यैः प्रमाणलक्षणे तथा वर्णनाच्च।

यदप्युक्तं एकप्रकारासकृदुक्तिरभ्यासस्तात्पर्यलिङ्गमिति वदतां भिन्नप्रकारा सकृदुक्तेरेतस्य अभ्यासत्वायोगात् कथ वा तेन तात्पर्यनिश्चयः। यस्तु तत्रैव ऋगादिपदानां वेदपरत्वसिद्धेः उच्चैस्त्वादेर्वेदधर्मत्वमिति भ्राम्यति स इत्थं प्रति बोधनीयः। मल्लग्रामादिशब्दादौ मल्लादिशब्दानामिव ऋगादिशब्दानामपि स्वार्थपरित्यागेनैव भूयसा व्यपदेशन्यायेन षष्ठ्यन्तानां ग्रामादिनेव वेदेनाप्यन्वयादेव

निर्देशोपपत्तेः न लक्षणेति इति (त.मा.पृ. ५७) तदपि न। अभ्यासस्य बहुबाधायोग न्यायेन स्वस्वरसप्रतिपन्ने तात्पर्यनिर्णायकत्वात् तन्न्यायस्य एकप्रकारासकृदुक्तिरूप मुख्याभ्यासाभावेपि वेदमात्राभ्यासरूपामुख्याभ्यासस्थलेपि सत्वात्। उच्चैरृचा क्रियते इति उपसंहारेण एकवाक्यत्वाय अभ्यस्तवेदशब्दानां लक्षणया तत्परत्वे बहु बाधापातात्। नच अभ्यासेन उपक्रमस्थवेदशब्दस्यैव वेदपरत्वनिर्णयः उपक्रम एव वेदशब्दाभ्यासादिति वाच्यम्। उपक्रमस्थवेदपदस्य वेदपरत्वनिर्णये तदेकवाक्यत्वाय उपसंहारस्यापि तत्परत्वनिर्णयात्। मल्लग्रामशब्दाद्युदाहरणमप्यसङ्गतम्। मल्ल-ग्रामशब्दयोरिव अत्रोपसंहारे ऋग्वेदशब्दयोः समभिव्याहाराभावात्। षष्ठीतत्पुरुष स्वीकारावसराभावाच्च। ऋक्पदस्य लक्षणां विना गत्यन्तराभावात्।

यदप्युक्तं प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेरिति सूत्रकारैरेव श्रद्धापद-स्याप्परताया उपपत्तेरब्विषयकप्रश्नप्रतिवचनमध्यपातादिरूपाया एव हेतुतयोक्तेः तस्योपक्रमादुपसंहारप्राबल्यागमकत्वादिति (त.मा.पृ. ५८) तदपि न। एवं सति प्रथमसूत्रेणास्य गतार्थत्वापातात्। प्रथमसूत्रे हि प्रश्नप्रतिवचनरूपोपपत्त्या अद्भिः संपरिष्वक्तो गच्छतीति निर्णीते उपक्रमे श्रद्धाशब्दश्रवणात् तस्योपसंहारापेक्षया प्राबल्यात् श्रद्धायुक्त एव गच्छति नाप्संपरिष्वक्त इत्यभ्यधिकाशङ्कायाम् उपसंहारस्य व्याख्यानरूपत्वेन प्राबल्यात्तदनुसारेणोपक्रमो नेय इति सिद्धान्त्यते।

उच्चारणभूयस्त्वस्य भूयोबलीयस्त्वन्यायाविषयत्वमित्यपि (त.मा.पृ. ५८) न मनोरमम्। बहुबाधस्यान्याय्यत्वादिति न्यायस्योच्चारणभूयस्त्वस्थलेऽप्यनपायात्।

यदप्युक्तमभ्यासादपूर्वत्वबलीयस्त्वमपि न। विधिमात्रनिमित्तत्वेनोक्तस्य शास्त्रा-रम्भहेतुतयाभिप्रेतस्य क्वचिदेव नियामकत्वायोगादिति (त.मा.पृ. ५९) तदपि न। क्वचिदेवेत्यवधारणस्यास्माभिरनुक्तेः।

यदपि अन्नं ब्रह्मेति व्यजानादित्यादौ अन्नादिपदाभ्यासादन्नादिपरत्वशंकाया अप्य पूर्वत्वादेव सुपरिहरत्वे ब्रह्मशब्दात्तत्परिहारो न स्यादिति (त.मा.पृ.५९) तदपि न। अपूर्वत्वादेवान्नादिपरत्वशंकापरिहारेपि कस्तर्ह्यन्योऽपूर्वार्थो योत्र विवक्षित इत्या-शंकायां ब्रह्मशब्दबलेनैव ब्रह्मपरत्वस्य निर्णेयत्वात्। जीवाद्भवन्तीत्यत्र जीवशब्दो ब्रह्मपरः। जीवो विनयिता साक्षीत्यादौ ब्रह्मणि प्रसिद्धेः।

अपूर्वतामात्रात् जीवश्रुतिभङ्गे तदभ्यासभङ्गे च जीवपरवाक्यमात्रलोपप्रसङ्ग इत्यपि (त.मा.पृ. ५९) अनवसरदुःस्थम्। अपूर्वत्वापेक्षया प्रबलानां फलवत्त्वार्थ वादोपपत्तीनां सत्त्वे अपूर्वताया बाधोक्तेः।

अनन्यपराभ्यास एव तात्पर्यगमक इत्यपि (त.मा.पृ. ५९) न। अनन्यपरेति विशेषणप्रक्षेपे प्रयोजनानुक्तेः।

एकप्रकारासकृदुक्तिरभ्यास इति वदतां समिधोयजतीत्यादाविव नामभेदात्संख्या-भेदादिहापि गुणभेदान्नैकप्रकारता युक्तेत्यपि (त.मा.पृ.५९) न चतुरस्रम्। अस्माभि मुख्यामुख्यभेदेनाभ्यास द्वैविध्याङ्गीकारात्। प्रकृते जुहोतीत्यंशेऽमुख्याभ्यासेन होमता-त्पर्यशंकायामपूर्वत्वाभावान्नेति विवक्षितम्। समिधो यजतीत्यादौ तु यजत्यंशेऽ मुख्याभ्याससत्वेपि संख्याभेदान्न तात्पर्यमिति। नच दध्ना होमकरणे वाक्यतात्पर्य निर्णयो न स्यात् होमस्य प्राप्तत्वेनापूर्वत्वाभावादिति वाच्यम् चन्द्रिकायामेत-च्छङ्कायाः समाहितत्वात्।

एकविषयासकृदुक्तिरूपोयमभ्यासः स्वरूपसिद्धये प्रकरणगतसजातीयप्रमाणान्तर प्राप्तिमुपजीवन् वाक्यावैयर्थ्याय विधेयमपेक्षत इत्यपि (त.मा.पृ. ५९) रिक्तम्। न च पुनरावर्तते न च पुनरावर्तत इत्येकप्रकारासकृदुक्तेः स्वरूपसिद्धये प्रकरणगत सजातीयप्रमाणान्तरानपेक्षणात्।

यत्तु प्राप्तार्थानामर्थवादानामप्राप्तविध्यनुसरणमत्रोपष्टम्भकमित्यपि न युक्तम् अभ्यासात्प्राबल्यानुपष्टम्भकत्वादिति (त.मा.पृ. ५९) तत्रोच्यते। प्राप्तार्थाना मित्यादिचन्द्रिकावाक्यस्यायमाशयः। ननु दध्ना जुहोतीत्यादावपि नाभ्यासादपूर्वता प्राबल्यं तथा सति दध्ना होमकरणे वाक्यतात्पर्याभावप्रसंगात् विधितात्पर्याभावस्तु प्राप्तत्वादिष्टः इति शंकायामेतद्वाक्यप्रवृत्तिः। तथाच यदि विधितात्पर्याभावमात्रं अपूर्वत्वाभावात्तर्हि प्राप्तार्थवादानामप्राप्तविध्यनुसरणं न स्यात्। अतो वाक्यतात्पर्य ज्ञापकत्वमप्यपूर्वतायाः सिद्धम्। प्रकृते अभ्याससत्वेपि विधितात्पर्याभाव एवापूर्वत्वा भावादुक्तः। स च त्वयाङ्गीकृत एव। विधिवाक्येप्यभ्यासेन तात्पर्यनिर्णयो बध्यतां बाल इत्यादौ दृष्ट इति।

यदप्यबाधितत्वरूपयोग्यता नोपपत्तिः। तथा सत्युपक्रमादिभिः सहपाठानुपपत्ते रिति (त.मा.पृ. ६३) तदपि न। अस्यापादनस्य निर्मूलत्वात्। न चोपक्रमादीनां वाक्यरूपत्वेन योग्यतायाश्चार्थनिष्ठत्वेन परस्परसाजात्याभावान्न सहपाठो युज्यत इति वाच्यम् अपूर्वतादीनामर्थनिष्ठानामपि सहपाठदर्शनात्। अबाधितार्थकत्वरूपत्वेन सहपाठोपपत्तेश्च। नच योग्यतायाः शाब्दबोधसामग्रीत्वेनातादृशैरुपक्रमादिभिर्न सहपाठ इति वाच्यम् योग्यतायाः शाब्दबोधसामग्रीत्वासंप्रतिपत्तेः। विश्वं मिथ्येत्यादिप्रतिवादिवाक्येऽयोग्यतानिश्चयसत्वेपि शाब्दबोधोत्पत्तिदर्शनात्। अन्यथा तन्निरासानुपपत्तेः।

65

विद्यामान्याख्ययतिना प्रीत्यै माधवमध्वयोः ।
विमृष्टस्तत्वमार्ताण्डः चतुःसूत्र्यंशमात्रतः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

